# आधुनिकप्रतीच्यप्रमाणमीमांसा

अरिन्दम चक्रवर्ती

डि.फिल् (अक्स्फर्ड्)



राष्ट्रियसंस्कृतविद्यापीठम्
मानितविश्वविद्यालयः
(राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदा A+ श्रेण्यां प्रत्यायितः)
तिरुपतिः - ५१७ ५०७
आन्ध्रप्रदेशः भारतम्

आचार्यः का. ई. गोविन्दन्
कुलपतिः



राष्ट्रियसंस्कृतविद्यापीठम्
मानितविश्वविद्यालयः
तिरुपतिः - ५१७ ५०७

राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदा A+ श्रेण्यां प्रत्यायितम्

# कुलपतिसन्देशः

विदांकुर्वन्तु विपश्चिदपश्चिमाः ऐदम्प्राथम्येन आधुनिक-प्रतीच्यप्रमाणमीमांसाख्यो नूतनः पाश्चात्यप्रमाणशास्त्रप्रतिपादन-परः महत्त्वपूर्णः ग्रन्थः विद्यापीठेनानेन प्रकाशं नीयत इति।

प्रकृतग्रन्थकर्तारः सतताध्ययनाध्यापनपराः अनवद्यन्याया-दिविद्याविद्योतितान्तःकरणाः सविमर्शम् उपात्तविषयोपपादनपटवः श्रीवासुदेवसार्वभौम-रघुनाथशिरोमणि-मथुरानाथ-जगदीश-तर्कालङ्कार-गदाधरभट्टाचार्यादीनाम् अवतारेण परिशुद्धवङ्ग-प्रदेशे लब्धजन्मानः अमेरिकादेशे होनलुलुनगरे मनोवास्थ-हवाई-विश्वविद्यालये प्राच्यप्रतीच्यशास्त्रं भाषातत्त्वशास्त्रं चाध्यापयन्तो बहूनन्तेवासिनः विराजन्ते।

इमे २००३ ऑगस्ट्-मासतः २००४ मार्च्-मासं यावत् अस्मद्विद्यापीठे संदर्शनप्राध्यापकपदे नियुक्ताः समधिगतन्याय-वेदान्तादिशास्त्राणां श्रीमतामाचार्याणां प्रह्लादाचार्याणां सकाशे तर्कताण्डवादिग्रन्थाध्ययनं कुर्वन्तः विद्यापीठविदुषः शोधकार्यरतान् विद्यार्थिनश्च अनुग्रहीतुं जातकुतूहलाः अर्वाचीनपाश्चात्यतत्त्व-शास्त्रसम्बद्धान् सप्तविषयानधिकृत्य व्याख्यानमकार्षुः।

व्याख्यानकाले अनुपस्थितानां विदुषां पाश्चात्यतत्त्वशास्त्राधिजिगांसूनां सौकर्यार्थं सर्वेषां व्याख्यानानां पुस्तकरूपेण प्रकाशनं क्रियते। येन तेऽपि पाश्चात्यतत्त्वशास्त्रविषयकं ज्ञानं किञ्चित् प्राप्नुयुः।

किं च भारतीयदर्शनेषु कृतबहुपरिश्रमाः संस्कृतविद्वांसः केचन आङ्ग्लभाषायां ग्रथितान् पाश्चात्यतत्त्वशास्त्रविषयान् न जानन्ति, एवमेव पाश्चात्यदर्शनशास्त्रज्ञाः केचन सुरगिरा ग्रथितान् भारतीयतत्त्वशास्त्रविषयान् यथावत् न जानन्ति। किं तु अरिन्दमचक्रवर्तिनस्तु उभयत्र प्रगाढपाण्डित्यपूर्णाः संस्कृतज्ञानामुपकाराय पाश्चात्यतत्त्वशास्त्रविषयान् सुरभारत्या न्यरूपयन् इति ते नूनमस्माकम् अभिनन्दनार्हा इति विनिवेद्य विरमामि।

भाद्रपदचतुर्थी
तिरुपतिः

***आचार्यः का. ई. गोविन्दन्***
कुलपतिः

# पुरोवाक्

महतः प्रमोदस्येदं स्थानं यद् अर्वाचीनपाश्चात्यतत्त्वशास्त्र-विचारप्रणालीमधिकृत्य गीर्वाणवाण्यां कश्चन प्रबन्धः प्रायः ऐदम्प्राथम्येन प्राकाश्यं नीयत इति। अद्यत्वे आधुनिकपाश्चात्य-प्रमाणशास्त्रस्य आङ्ग्लभाषामाध्यमेन वाग्व्यवहारस्तावत् सुप्र-सिद्धः। तत्रत्यप्रमेयजातस्य शास्त्रीयसंस्कृतभाषया निरूपणं नैव सुसाधम्। तदेतत् महता प्रयासेन प्राच्य-प्रतीच्यविद्यामर्मज्ञैः अरिन्दमचक्रवर्ति-महाभागैः सरलया गभीरया शास्त्रोचितया च भाषया सम्पादितमिति ते समभिनन्दनीयाः।

व्याख्यानसप्तकनिबन्धनरूपः ग्रन्थोऽयं मया समवलो-कितः। तत्रैको विचारः विद्वज्जनतोषाय किञ्चिद् विमृश्यते।

न्याय्यत्वे सति याथार्थ्ये च सति निश्चयत्वं प्रमालक्षणमिति पाश्चात्याः। निश्चयत्वानुपादाने संशये, याथार्थ्यानुपादाने च विपर्ययेऽतिव्याप्तिरिति तयोर्लक्षणे प्रवेशः। विप्रलम्भकवाक्यजन्ये यादृच्छिकसंवादिनि यथार्थनिश्चये किन्तु, अनाप्तोक्तत्वेन अप्रमायां ज्ञानेऽतिव्याप्तिनिरासाय न्याय्यत्वमिति लक्षणघटकदलानां प्रयो-जनमुपवर्णयन्ति।

नैय्यायिकास्तु यथार्थानुभावः प्रमेति, अनुभवे याथार्थ्यं च तद्वति तत्प्रकारकत्वमिति च निरूपयन्ति। स्मृतौ अतिव्याप्ति-निरासाय अनुभवत्वमिति, अयथार्थानुभवे चातिव्याप्तिनिरासाय याथार्थ्यमिति लक्षणघटकदलसार्थक्यं प्रतिपादयन्ति।

अस्ति तावत् सुरूढमूलः कश्चित् प्रत्ययो बहूनां पाश्चात्य-दर्शनपारदृश्वनां यद् भारतीयानि नाना दर्शनानि चिरात् लब्ध-प्रतिष्ठान्यपि प्रायः पञ्चषेभ्यः शतमानेभ्यः चर्वितचर्वणविषयतां भजन्ति नूतनदार्शनिकतत्त्वानामनाविष्कारेण विमर्शनविचक्षणानां विद्वत्तल्लजानां चित्तान्याक्रष्टुं न प्रभवन्तीति। किञ्च, प्रायः द्विसहस्रवर्षेभ्यः प्राक् प्लेटो-अरिस्टाटल्-साक्रटीस्प्रधानैः प्राचीनैः पाश्चात्यदार्शनिकप्रवरैः प्रतिपादितान्येव तत्त्वानि अनुरणद्भिः अर्वाचीनैः पाश्चात्यैः अतीते द्वित्रिशतसंवत्सरात्मके अत्यल्पे काले आविष्कृतानि नूतनानि मतानि, तैः प्रदर्शितां सुसूक्ष्मतात्त्विक-विषयविचारचातुरीं निर्दिशन्तः ते कथयन्ति - 'अहो पश्यत तेषां प्रज्ञापाटवम्, पूर्वमचर्चितानाम् अभिनवानामतिगहनानां च प्रमेयाणाम् अनन्यादृशं विमर्शनकौशलम्! गुरोरपि मतं शिष्यः विना सङ्कोचं गाढं विमृशन् नैष्ठुर्यस्य परां काष्ठां प्रदर्शयति खलु। नोत्सहन्ते च ते सर्वथा अन्धेनैव नीयमानमन्धमनुकर्तुम्। तेषामयं स्वभावः तद्दर्शनस्य तीव्रतमे विकासे निदानभूतः। अधुनातनेषु भारतीयदार्शनिकेषु तद्विरुद्धः स्वातन्त्र्येण विचार-शीलताया विरहः कूपमण्डूकप्रवृत्तिश्च बहोः कालात् निरन्तरम् अनुपयुज्यमाने अप्रवहज्जल इव भारतीयदर्शनेषु आधुनिका-नामनादरणे हेतू' इति।

अत्रेदमवधेयम् - ये तावदेवं पाश्चात्यदर्शनवैभवप्रशंसापरा-यणाः भारतीयदर्शनानां महत्ताभिज्ञानपराङ्मुखाश्च पण्डितम्मन्याः, ते खलु गुरुसन्निधौ अविकलाविच्छिन्नाध्ययनसम्प्राप्यशास्त्रमर्म-

ज्ञानविधुराः केवलं भाषान्तराण्याश्रित्य असमीचीनम् अनूदितानां शास्त्रग्रन्थानां स्वयं पठनमात्रतः प्राप्तलघुशास्त्रपरिचयाः स्वीय-प्रज्ञाप्रकर्षे नितरां बहुमानिनः। वस्तुतस्तु, सर्वाण्यपि दर्शनानि बहोः कालादारभ्य तत्तद्दर्शने कृतभूरिश्रमैः स्वसिद्धान्तप्रतिष्ठा-पनबद्धदीक्षैः स्वस्वसिद्धान्तासाधारणविचित्रतरप्रक्रियानिरूपणार्थम् आविष्कृतपारिभाषिकपदघटितग्रन्थभूयिष्ठानि संस्कृतभाषापरिण-तैरपि याथातथ्येन परिचेतुमशक्यानि। तत्तच्छास्त्रसम्प्रदायाभिज्ञानां प्राज्ञानामन्तेवासितामाश्रित्यैव तदुपदेशेन वेदितव्यानि। अत एव पाश्चात्यदर्शनमात्रे कृतपरिश्रमैः विहितानि भारतीयदर्शन-विमर्शनानि विवेचकैर्विपश्चिद्भिर्न तथा आद्रियन्ते।

अस्त्वेतदेवम्। इदं तु तथ्यं यदधुना पदवाक्यप्रमाण-शास्त्रपारावारपारीणतया सुप्रथिताः अविच्छिन्नाध्ययनपरम्परागत-निष्कलङ्कवैदुष्यपरिपूर्णाश्च अङ्गुलिगण्या विद्वद्धौरेया ये केचन तत्र तत्र दृश्यन्ते तेषां तु प्राचीनप्रतीच्यदर्शनपरिचयो वा अर्वाचीन-प्रतीच्यदार्शनिकविचारविभवस्य परिज्ञानं वा सर्वथा नास्तीति। दर्शनशास्त्रसम्बद्धान् प्रमाणप्रमेयादीन् विविधान् विषयान् चिराद् विचारयन्त एते समानेषु विषयेषु प्रतीच्यदार्शनिकैरुट्टङ्कितान् आक्षेपान् परिहारांश्च तदीयसाहित्यपरिशीलनं विनाऽपि चर्चितवन्तः स्युः। सम्भावितप्रकाराणां परिमितत्वात्, मानवबुद्धीनां चिन्तनपद्ध-तेरैकरूप्यस्य स्वाभाविकत्वाच्च। सति चैवं परस्परभाषानभिज्ञैः विभिन्नदेशकालसम्बद्धैः सूरिभिः समानान् विषयानधिकृत्य कथं चर्चितं कथङ्कारं च समाहितमित्यत्र जिज्ञासूनां कुतूहलं स्वाभा-

विकमेव। अद्यत्वे प्रतीच्यैर्दार्शनिकैर्यत् सिद्धान्तितं तत्सर्वमङ्गीकर्तुं किमुचितम्? इत्यात्रापि सुधीभिरस्ति विचिन्तनीयम्। तत्र च उपन्याससङ्कलनेऽस्मिन् चर्चितं प्रतीच्यदार्शनिकाभिमतं प्रमालक्षणमेकं निदर्शनम्।

न्याय्ययथार्थप्रतीतित्वम् (knowledge is justified true belief) इति हि प्रतीच्यानां प्रमालक्षणम्। न्याय्यत्वमत्र सोपपत्तिकत्वम्। यथार्थत्वं चार्थाव्यभिचरितत्वम्। प्रतीतित्वमपि निश्चयत्वरूपम्। संशयविपर्ययर्योर्व्युदासाय प्रतीतित्वयाथार्थ्ययोर्लक्षणशरीरे प्रवेशः। यादृच्छिकतयाऽर्थाव्यभिचारिणि अनाप्तोच्चरितवाक्यजन्ये निश्चयेऽतिव्याप्तिपरिहाराय न्याय्यत्वविशेषणमिति तेषामाशयः। अत्रेदं चिन्तनीयम् - यादृच्छिकसंवादिनि प्रतारकवाक्यजन्ये निश्चये, तद्वति तत्प्रकारकत्वे सत्यपि प्रमात्वं नास्तीति कथं निश्चीयते? तादृशं निश्चयमुद्दिश्य विवेचकैः प्रमात्वव्यवहारः न क्रियत इति तु न तत्र निदानं भवेत्। विवेचकास्तु वस्तुनि लक्षणसद्भावं निरीक्ष्य तद्वाचकशब्दव्यवहारं कुर्वन्तीति प्रसिद्धमेतत्। तथा च तद्वति तत्प्रकारकानुभवत्वं तादृशे निश्चये संवीक्ष्य शब्दव्यवहारकुशलाः कथं न तत्र प्रमापदव्यवहारं कुर्युः? यदि च न्याय्यत्वघटितं प्रमालक्षणं न ते तत्र पश्यन्तीति न तेषां तत्र प्रमाशब्दव्यवहारस्तर्हि प्राज्ञानां प्रमाशब्दव्यवहाराभावे तत्र सिद्धे, अत एवाप्रमायां तत्र निश्चयेऽतिव्याप्तिपरिहाराय प्रमालक्षणे न्याय्यत्वप्रवेशः, प्रमालक्षणस्य न्याय्यत्वघटितत्वे सिद्धे तस्य

लक्षणस्य तादृशे निश्चयेऽभावात् तत्र प्रमाशब्दव्यवहाराभाव इत्यन्योन्याश्रयः।

यदपि उच्येत - नात्र शास्त्रकारैः प्रमिणोमीति प्रतीतिसिद्धस्य प्रमातत्वस्य लक्षणमुच्यते; किन्तु "KNOW" धात्वर्थस्य लक्षणमेव निरूप्यते; स चार्थः न्याय्यत्वविशिष्ट एव भवतीति - तदपि चिन्त्यम्। शास्त्रकाराः हि स्वीयतन्त्रापेक्षितान् पदार्थान् लक्षयन्ति। प्रमेयसिद्ध्यौपाधिकः यथार्थज्ञानरूपः प्रमातत्त्वविशेष एव शास्त्रापेक्षितः। स एव हि लक्षणीयः; न तु व्यवहारमात्रसिद्धः "KNOW" धात्वर्थः। तस्य शास्त्रानुपयोगित्वात्, शास्त्रानपेक्षितत्वाच्च। सति चैवं "KNOW" धात्वर्थलक्षणनिरूपणं व्यर्थमापद्येत इति।

अपि च, ज्ञानप्रामाण्यं स्वत इति मीमांसकादयः केचन। नैय्यायिकादयश्चापरे परत इति। यदि प्रामाण्यं न्याय्यत्वघटितं तर्हि प्रामाण्यस्वतस्त्ववादिना प्राथमिकज्ञानग्रहग्राह्यत्वं न्याय्यत्वस्यापि स्वीकरणीयं भवति। परन्तु प्राथमिकज्ञानग्रहसमये युक्त्यनुसन्धानम् अनुभवविरुद्धमिति समेषां मतम्। यदि ज्ञानप्रामाण्यं परत एव ज्ञायत इति सिद्धान्तस्तदापि क्लेशोऽनिवार्यः। परतःप्रामाण्यवादिना 'इदं ज्ञानं प्रमा आप्तोच्चरितवाक्यजन्यत्वात्' इत्यादिरूपेण खलु अनुमातव्यम्। प्रमात्वस्य न्याय्यत्वघटितत्वे 'इदं ज्ञानं न्याय्यत्वे सति यथार्थत्वे सति निश्चयात्मकम् आप्तवाक्यजन्यत्वात्' इत्यनुमानाकारः स्यात्। अत्र च साध्यघटकं न्याय्यत्वम् आप्तवाक्यजत्वादिरूपमेवेति भागशः साध्याविशिष्टता स्यात्।

एवमन्येऽपि केचनाऽऽक्षेपा अर्वाचीनप्रतीच्योक्तप्रमालक्षण-विषये आविर्भवेयुः। अत्रोट्टङ्किता आक्षेपाः प्रतीच्यैर्दार्शनिकैः समाहिताश्च स्युः। किन्तु कथमेते समाहिताः? किं ते सर्वथाऽङ्गीकारमर्हन्ति? उत केचन प्रश्नाः पुनः प्रादुर्भवन्तीत्यादयः शङ्काः भवेयुरेव। उभयदर्शनपारङ्गतानां प्राज्ञानां संवादस्त्वेकः मुख्योपायः येन तत्तत्सिद्धान्तप्रक्रियाः स्पष्टा भवेयुः। शङ्काश्च निर्मूलिताः स्युः। परन्तु तादृशाः शास्त्रविषयविवेचनविचक्षणा उभयोरपि दर्शनयोः तलस्पर्शिवैदुष्यभाजः संस्कृते आङ्ग्ले च संसाधितप्राभवाः विद्वदग्रगण्या अत्यन्तमेव विरलाः। अङ्गुलिगण्येषु तादृक्षु विपश्चित्सु अन्यतमा भवन्ति आचार्याः अरिन्दमचक्रवर्तिमहोदयाः।

दार्शनिकप्रवरैः, कीर्तिशेषैः आचार्यैः एम्. पि. रेगे महाभागैः, तथा भारतीयदर्शनेषु आधुनिकानां श्रद्धासमुत्पादने कृतभूरिपरिश्रमाणां मध्ये अग्रगण्यैः शास्त्रचिन्तनजीवितैः आचार्यैः दयाकृष्ण-महाभागैश्च बहुषु स्थलेषु भारतीयदार्शनिकानुसन्धानपरिषदादिद्वारा आयोजितासु विद्वत्सदस्सु अरिन्दमचक्रवर्तिमहाभागानां शास्त्र-विचारचातुरी मया बहुवारमनुभूता। वर्षद्वयात् प्राग् राष्ट्रियसंस्कृत-विद्यापीठे तिरुपतौ सन्दर्शकप्राध्यापकत्वेन कतिचिन्मासपर्यन्तं तर्कताण्डवादिग्रन्थानां परिशीलनार्थं यदा एतैरुषितं तदा तु अनेकसंवत्सरपर्यन्तमेतैः विशेषतः समनुष्ठितविविधशास्त्राध्या-पनसंशोधनादिना समासादितः परिणतप्रज्ञातिशयः साक्षात्कृतः।

विद्यापीठे स्वीये उपस्थितिसमये एतैः प्रतीच्यदर्शनमधिकृत्य प्रदत्ता उपन्यासा एव ग्रन्थेऽस्मिन् ग्रथिताः। ऐतिहासिक-क्रममनुरुध्यात्र विशेषतो विमृष्टाः प्रतीच्यदर्शनसम्बद्धाः विषया एव चक्रवर्तिमहाभागानां प्रगाढं पाश्चात्यदर्शनवैदुष्यं विवेचन-वैचक्षण्यं च प्रकटयन्तीति न तत्र मया किञ्चिदस्ति वक्तव्यम्। भारतीयदर्शनार्णवेषु कृतावगाहानां विदुषां छात्राणां च सममेव महान्तमुपकारमयं ग्रन्थ आतनोतीत्यत्र नास्ति कश्चित् सन्देहः।

बेङ्गळूरु
श्रीकृष्णजन्माष्टमी
ऑगस्ट् - २००५

***आचार्यः डि. प्रह्लादाचार्यः***
निवृत्तकुलपतिः
राष्ट्रियसंस्कृतविद्यापीठम्
मानितविश्वविद्यालयः
तिरुपतिः

| | | |
|---|---|---|
| ग्रन्थनाम | - | **आधुनिकप्रतीच्यप्रमाणमीमांसा** |
| रचयिता | - | **अरिन्दम चक्रवर्ती** (डि. फिल्. अक्स्फर्ड्) |
| ग्रन्थाधिकारः | - | राष्ट्रियसंस्कृतविद्यापीठम् तिरुपतिः भारतम् |
| प्रकाशनवर्षम् | - | २००५ |
| रा.सं.वि.ग्रन्थमाला- | | ११८ |
| संस्करणम् | - | प्रथमम् |
| पृष्ठानि | - | १६२ |
| प्रतिकृतयः | - | ५०० |
| प्रकाशकः | - | **आचार्यः. के. ई. गोविन्दन्**<br>कुलपतिः<br>राष्ट्रियसंस्कृतविद्यापीठम्<br>मानितविश्वविद्यालयः<br>तिरुपतिः आन्ध्रप्रदेशः भारतम् |
| पुस्तकप्राप्तेः स्थानम् | - | **राष्ट्रियसंस्कृतविद्यापीठम्**<br>मानितविश्वविद्यालयः<br>तिरुपतिः - ५१७ ५०७<br>आन्ध्रप्रदेशः भारतम् |
| E-mail : | | |
| विद्यापीठम् | - | sansknetrsvp@eth.net |
| ग्रन्थकर्ता | - | arindam@hawaii.edu<br>arindam.chakrabarti@gmail.com |
| अक्षरयोजनम् | - | संस्कृतनेट्केन्द्रम् |
| मुखपृष्ठविन्यासः | - | के. के. गिरिधरः, सुशीला डिसैन्स्, बेङ् |
| मुद्रकः | - | Elegant Printing Works, Bangalore |
| मूल्यम् | - | |
| Website | - | www.rsvidyapeetha.ac.in |

# समर्पणम्

तर्कस्त्यजति कार्कश्यं कुटिलः सरलायते।
ध्वंसाः शिष्येषु शिष्यन्ते सन्देहप्रतियोगिकाः।।
यदध्यापनसौकर्यात्तस्मै दर्भाग्रधीमते।
प्रामाण्य**तर्कतीर्थाय** गुरवे **विश्वबन्धवे**।।
ग्रन्थसेतुं इमं कञ्चित् प्राच्यपाश्चात्यतर्कयोः।
समुत्सृज्य कृतार्थोऽहं तच्छिष्येष्वधमाधमः।।

ಌ

# विषयानुक्रमणिका

# भूमिका

संस्कृतभारत्या सङ्ग्रहेण पाश्चात्यप्रमाणशास्त्रस्य परिचयं प्रदातुम् अयं प्रयासः। परन्तु ये पाश्चात्यदर्शनविषये जिज्ञासवस्ते आङ्ग्लभाषया रचितान् तद्देशीयविपश्चितां ग्रन्थान् एव अधीत्य तेषां प्रमाणप्रमेयतत्त्वशास्त्रस्य ज्ञानमाहर्त्तुं समर्थाः। इतरेषां खलु आङ्ग्लभाषाऽनभिज्ञानां संस्कृतभाषाकुशलानां स्वदेशीयपरम्परानुरागिणां भारतीयानां प्रायः पाश्चात्यदर्शनविषये अवधीरणा, उपेक्षा, अनौत्सुक्यं वा दृश्यते - इति चेत् कस्य कृते अयं प्रयासः सप्रयोजनः, को वा अस्य ग्रन्थस्य उपयोग इति संशयो जागर्त्ति।

अस्य संशयस्य समाधानमिदमुच्यते।

अधुना भारतवर्षे ये संस्कृतसरस्वतीसेवकाः व्याकरण-साहित्यन्यायवेदान्तमीमांसादिशास्त्राणि पठन्ति पाठयन्ति च, तेऽपि न प्राचीनतपोवनवासिनः। नाऽपि पाश्चात्ययन्त्रशिल्पविज्ञानचिकित्साशास्त्रराजनीतिदर्शनादिभिरस्पृष्टं तेषां जीवनम्। किन्तु सर्वथा प्रतीच्यदेशवासिभ्य एव भौतिकविज्ञानं, सङ्गणकयन्त्रविज्ञानं, रसायनविज्ञानं, स्नायुमस्तिष्कविज्ञानं, दूरदर्शनदूरभाषणादिप्रक्रियाश्च गृहीत्वा एव तेषां संस्कृतपण्डितानामपि दैनन्दिनं जीवनं प्रचलति। येषां व्यावहारिकविज्ञानानां फलानि भुज्यन्ते तेषामेव भित्तिभूमौ यत्प्रमाणतत्त्वशास्त्रविचाराः प्रवर्तन्ते तान् अपि बुभुत्सन्ति मननशीलाः मनीषिणः। तस्मात् आधुनिक-

प्रतीच्यप्रमाणमीमांसायां भारतीयपण्डितानामुपादानबुद्धिरस्तु वा मा वा, तज्ज्ञानं तु तेषामद्य वा श्वो वा अत्यावश्यकमेव। वस्तुतस्तु न हि सर्वे संस्कृतपारङ्गमाः पाश्चात्यज्ञानविज्ञानेषु अनुत्सुकाः। सन्ति बहवः सुरवाणीविशारदाः ये आधुनिकजीवनाङ्गीभूतानां पाश्चात्यमतवादानां मूलमन्विषन्तः पाश्चात्यदर्शनान्यपि बोद्धुमुत्सहन्ते। अपि च तुलना तुलनीयवस्तुद्वयज्ञानसापेक्षा भवति। भ्रमप्रमासंशयप्रत्यक्षानुमानशब्दस्मृत्यादीनां विचारो न केवलमेतद्देशप्रसूतैर्नैयायिकैर्मीमांसकैर्वेदान्तिभिर्बौद्धैश्च कृतः परन्तु पाश्चात्यदार्शनिकैरपि बहुधा कृतः। तेषां विचारशैली खलु कथञ्चित् समाना कथञ्चित् भिन्ना विचित्रा वर्तते। तेषां प्रमाणशास्त्रस्य परिज्ञानेन विना नास्ति भारतीयदर्शनप्रस्थानैस्तुलनीया काऽपि अन्या कुत्रापि प्रमाणतत्त्वचिन्तानपरम्परा इति गौरवपूर्णा अहमहमिकाऽपि निष्प्रमाणिका इव भाति। उभयपरम्परयोः ज्ञानेनैव अन्यतरायाः उत्कर्षः अपकर्षः तुल्यत्वं वा स्थापयितुं शक्यते। गृहान्तरस्थितानां रत्नकोशानाम् अपरिज्ञानाद्वा ज्ञात्वाऽपि तेषाम् अस्वीकारादेव वा यो हि वराकः साहङ्कारः स्वगृहमात्रं रत्नैकभाण्डारं मन्यते, तस्य पुत्रपौत्रादय एव परगृहस्थरत्नलालसया तं परित्यजन्ति, उपहसन्ति च। अन्यच्च - अस्मर्यमाणारम्भात् कालात् भारतीया आन्वीक्षिकी प्रबलपूर्वपक्षाणामनुवादखण्डनादिभिरेव प्रवर्द्धमाना प्रवहति। इदानीं तस्याः भारतीयतर्कतरङ्गिण्याः स्रोतसि किञ्चित्

मन्दीभवनमिव परिलक्ष्यते। यदि आधुनिकपाश्चात्यप्रमाण-मीमांसायाः नूतनपूर्वपक्षाः अत्र स्रोतसि बाधां जनयेत् तदा संस्कृतशास्त्रचर्चानदी एव पुनर्वेगवती भवेदित्यपि आशा उदेति।

पुनश्च अधुना प्रायः सर्वे भारतीयदर्शनाध्यापकाः न्यायादि-दर्शनान्यस्मदीयानि विदेशेष्वपि प्रचरन्तु, विश्ववासिनः पाश्चात्या अपि विद्वांसः प्राचीनभारतीयतत्त्वचिन्तनपरम्परायाः माहात्म्यमैश्वर्यं च अनुभवेयुरिति कामयन्ते। परन्तु परस्परपरिचयेण विना परिचयः सम्यक्तया न भवति। यथा पाश्चात्यपण्डिताः अपि महता परिश्रमेण द्विशताधिकवर्षाणि यावत् संस्कृतशास्त्राण्यधीत्य एव क्रमशः स्वकीयपाश्चात्यचिन्तनपरम्परासु भारतीयान् कौशलेन दत्तदीक्षान् कृतवन्तः, तथैव पाश्चात्यदेशीयानां दर्शनशास्त्राणि सम्यक् ज्ञात्वा एव भारतीयपण्डिताः तदुपयोगिन्या रीत्या भारतीयानि आस्तिक-नास्तिकदर्शनानि तान् बोधयितुं शक्नुयुर्नान्यथा। यावत् संस्कृत-भाषाविद्वांसः स्वभावतः पाश्चात्यदर्शने अनुत्सुकाः भविष्यन्ति तावदेव पाश्चात्यविचारकाः अपि संस्कृतनिबद्धदर्शनवैभवेऽपि श्रद्धाशून्याः स्थास्यन्ति।

तस्मात् संस्कृतेन पाश्चात्यप्रमाणदर्शनव्याख्याने अस्माक-मियं प्राथमिकी प्रचेष्टा न हि निष्प्रयोजना इति नः प्रतीतिरस्ति।

अत्र - "प्रज्ञा विवेकं लभते भिन्नैरागमदर्शनैः" इति भर्तृहरिवचनमस्मान् स्मारयता सकलविद्योत्साहिना निष्पक्ष-

पाततर्करसिकेन सर्वदर्शनविमर्शव्यसनिना अस्मदाचार्येण तत्रभवता प्रह्लादाचार्येण प्रोत्साहितोऽहम् तिरुपतिस्थ-राष्ट्रिय-संस्कृत-विद्यापीठे (२००३, ऑगस्ट्मासतः २००४, मार्च्-मासपर्यन्तम्) यानि व्याख्यानानि दत्तवान् तेषामेव लिखितरूपेण प्रकाशनमस्मिन् ग्रन्थे क्रियते। अस्य मुद्रणवेलायां प्राच्यपाश्चात्यव्याकरणप्रवीणानां श्रीमतां रामकृष्णमाचार्युलुमहोदयानाम् आधमर्ण्यमहं स्वीकरोमि।

ये चान्ये विद्यापीठस्थाः साग्रहं व्याख्यानानि मे श्रुतवन्तः प्रश्नादींश्च पृष्ट्वा मामुद्बोधितवन्तः तान् प्रत्यपि कार्तज्ञं व्याहरामि। यदि द्वित्राः अपि भारतीयदर्शनेषु कृतपरिश्रमाः संस्कृत-भाषाभिज्ञाश्छात्राः अध्यापकाः शोधकार्यरताः अध्येतारः अस्मात् पुस्तकात् पाश्चात्यप्रमाणशास्त्रे उपजातकौतूहलाः भवन्ति तदा श्रमं मे सफलं गणयिष्यामीति शम्।

*अरिन्दम चक्रवर्ती*

हवाई अमेरिका
गुरुपूर्णिमा २००५

## प्रथमं व्याख्यानम्
# प्रमालक्षणविचारः

प्रमाणं प्राणनिलयं श्रीराधाप्राणवल्लभम् ।
चित्तार्जुनरथाध्यक्षं रथाङ्गपाणिमाश्रये ।।

वीरबाधकविपक्षभक्षिणी धीरसाधकसपक्षरक्षिणी ।
साऽक्षिणी मम सदाधितिष्ठतां साक्षिणी सकलसंविदां परा ।।

यतो मेयसिद्धिः प्रवृत्तिश्च सार्था
सुवेद्मीति बुद्धिर्यमेवावगच्छेत् ।
गुरुं हृत्प्रदीपं तम् ओंकारनाथं
प्रमाणस्वरूपं मदात्मानमीडे ।।

स्वभावतो हि ज्ञानवन्तो मनुष्याः। ज्ञानेनैव स्वसन्निकृष्टानां वस्तूनां, यथासाध्यं विप्रकृष्टानामपि विषयाणां स्वरूपमवधार्य, किं हेयं किमुपादेयं किं वा उपेक्ष्यमिति अनायासमेव निर्णीय, कर्मसु प्रवर्तन्ते, जीवन्ति च मानवाः। बाह्येन्द्रियाणि संयम्यापि यदा केनचित् आवृत्तचक्षुषा ध्यानरतेन स्थीयते तदा तस्यापि स्मरणरूपं मानसप्रत्यक्षादिरूपं वा स्वशरीराभ्यन्तरस्थप्राणापानादिज्ञानरूपं वा यत्किञ्चिज्ज्ञानमासुषुप्तेरुत्पद्यमानमेव भवतीति कृत्वा जाग्रत्स्वप्नात्मकं मानवजीवनमनवरतज्ञानधारात्मकमेव प्रवहतीत्यत्र नास्ति लेशतोऽपि संशयावसरः।

अत्र किल -

"ज्ञानिनो मनुजाः सत्यं किन्तु ते न हि केवलम् ।
यतो हि ज्ञानिनः सर्वे पशुपक्षिमृगादयः ।।"[1]

इति मार्कण्डेयपुराणवचनमस्माकं स्मारयति चाक्षुषश्रावणस्पार्शनादिरूपं प्रत्यक्षज्ञानं न हि मनुष्यत्वव्यवच्छेदकमिति मकरमर्कटमार्जारमूषिकादिष्वपि तिर्यक्प्राणिषु तस्य सुलभत्वात्। केषुकेषुचन विषयेषु तावत् पशूनां पक्षिणां वा बुद्धिर्मनुष्येभ्योऽपि अतिरिच्यत इति पशुवैज्ञानिकेभ्यः शृण्मः। श्वा यावत् जिघ्रति न तावत् नरः। अपि च या ज्ञानात्मिका प्रतिभाख्या शक्तिरेकैकशः श्रूयमाणेषु पदेषु मनुजानामखण्डवाक्यार्थबोधजनने कारणीभूतेति भर्तृहरिणा कथ्यते सा एव प्रतिभा "स्वरवृत्तिं विकुरुते मधौ पुंस्कोकिलस्य"[2] अपि इत्यतः स्वयं स्वप्रतिभास्वरूपमजानन्तोऽपि ज्ञानवन्त एव तुरङ्गमविहङ्गमप्लवङ्गमादय इत्यतो जिज्ञासा उदेति - कस्तावत् ज्ञानप्रसङ्गे तिर्यङ्मानवयोर्विशेष इति।

तत्र विविधविषयज्ञानान्याश्रित्य आहारनिद्राभयमैथुनादिजीवकर्मसु रतोऽपि मनुष्यो 'मननेन हि जीवति' इति सुभाषितानुसारेण प्रतीच्यदर्शनादिगुरोः 'सॉक्रातिस्'- महाभागस्य बहुविश्रुता या उक्तिः "An unexamined life is not worth living"[3] (जीवनं न जीवनार्हं मननेनापरीक्षितम्) इति, तामनुसृत्य वा मनुष्याः न केवलं जानन्ति, परन्तु जानामि न जानामि वा इति संशेरते; 'कोऽद्धा वेद यदि वा न वेद' इति विकल्पयन्तो विमृशन्ति; 'किं मे ज्ञानमिदं यथार्थमयथार्थं

वा, प्रत्यक्षं परोक्षं वा, मम बुद्धिविषयोऽयं वास्तवः काल्पनिको वा, ज्ञानमिदं शब्दानुपातिवस्तुशून्यं, शब्दातिरिक्तवस्तुग्राहकं वा, केवलं मदीयमथवा अन्येषां ज्ञानैः सह संवादभाजनं वा' इत्यादिजिज्ञासाभिः स्वकीयानि ज्ञानान्यपि परीक्षन्ते, इत्येव नराणां नरत्वे मानम्। न कदापि तिर्यक्षु ईदृशी ज्ञानस्वरूपजिज्ञासा स्वनिष्ठज्ञानप्रामाण्य-परीक्षाभिलाषो वा जायते।

तत्र तावत् निश्चयात्मकयथार्थज्ञानमेव सफलप्रवृत्तिजनकम्। संशयकवलितात् ज्ञानात् निष्कम्पप्रवृत्तिर्नोदेति। मिथ्यानिश्चयात् तु प्रायेण निष्फला एव प्रवृत्तिर्जायते। तस्मात् 'केनोपायेन नियमेन यथार्थनिश्चयाः अव्यभिचारिणो वा प्रत्ययाः जायेरन्', 'कथं वा ममेद ज्ञानं यथार्थमेव इति अध्यवसायः उन्मूलितभ्रमशङ्काकण्टको भवति', 'सर्व एव प्रत्ययाः अप्रामाण्यशङ्काराहुग्रस्ता एव' इति नियतसंशयवादिवैतण्डिकमतात् कथं परित्राणं लभ्येत इत्यादयो विषयाः यस्मिन् शास्त्रे विचार्यन्ते तदेव प्रमाणशास्त्रमिति सङ्क्षेपतो निर्वक्तुं शक्यते। एतादृशी प्रमाणमीमांसा यथा जैमिनिगोतमादित आरभ्य पट्टाभिरामशास्त्रिबदरीनाथशुक्लरामानुजताताचार्यादि-पर्यन्तायां भारतीयपरम्परायां बहुधा वितता, तथैव प्रतीच्यदेशेऽपि प्लेटोमहाभागादारभ्य देकार्तेह्यूम्प्रभृतिभिरभिवर्धिता अधुनातनैः गोल्ड्मॅन्लेह्रार्प्लाण्टिङ्गादिभिः दार्शनिकाग्रेसरैः बहुविचित्ररीत्या प्रमायाः प्रमोपायानां च लक्षणविभागपरीक्षादिभिः प्रपञ्चिता वर्तते। एतेषु भाषणेषु अहं तस्या एव आधुनिकप्रतीच्यप्रमाणमीमांसायाः केषाञ्चन मूलवादविवादानां परिचयं प्रदातुं यतिष्ये।

अत्रादौ केषाञ्चित् प्रसिद्धशब्दानां संस्कृतरूपान्तरं स्थिरीकृत्य अग्रे सरामः।

| | | |
|---|---|---|
| Epistemology | = | प्रमाणमीमांसा |
| Knowledge | = | प्रमा / प्रमाणम् |
| Belief | = | प्रतीतिः |
| Justification | = | न्याय्यत्वम् |
| Truth | = | याथार्थ्यम् |

प्राचीनायां (ग्रीक्नाम्न्यां) यावनभाषायां ज्ञानप्रकारभेदं सूचयितुं नैके शब्दाः प्रयुक्ताः।

| | | |
|---|---|---|
| Gnosis | = | ज्ञानम् (यथार्थम् अयथार्थं वा ज्ञानं सामान्यतया अनेन शब्देन उच्यते) |
| Phronesis | = | इतिकर्तव्यताज्ञानम्/ व्यावहारिकनीतिज्ञानम् |
| Episteme | = | प्रमा (यथार्थं सम्यग्ज्ञानम्) |
| Techne | = | कौशलज्ञानम्/ शिल्पज्ञानम् |
| Sophia/Wisdom | = | पराविद्या |

Knowledge is Justified True Belief (JTB)

न्याय्ययथार्थप्रतीतित्वं प्रमात्वम्। (न्या.य.प्र)

*S* knows that *p* if and only if

1. *S* believes that *p*
2. *p* is true
3. *S* is justified in believing that *p*. (*S* has the right to be sure that *p*).

अत्र 'प्रमा' पदं पारिभाषिकतया आङ्ग्लभाषायाः 'knowledge' - पदस्य पर्यायवाचित्वेन बोद्धव्यम्। प्राचीनयावन्यां ग्रीक् - भाषायां खलु ज्ञानवाचकाः बहवः शब्दा आसन्। परन्तु न ते सर्वे सर्वथा पर्यायवाचिनः। यथा न्यायसूत्रे ज्ञानमुपलब्धिर्बुद्धिरित्यनर्थान्तरमित्युक्तेऽपि एतत् त्रयं साङ्ख्यप्रमाणमीमांसायां परस्पराद्विविच्य परिष्क्रियते तथैव सामान्यतो ज्ञानवाचका एते ग्रीक् शब्दाः दार्शनिकविचारवेलायां भिन्नार्थकतयैव व्यवह्रियन्ते। 'Gnosis' इति ज्ञानमात्रवाचकः, 'episteme' इति प्रमावाचकः, 'phronesis' इति इतिकर्तव्यताज्ञानवाचको धर्माधर्मादिप्रयोगयोग्यज्ञानवाचकः, 'sophia' इति परमतत्त्वप्रज्ञानवाचकः शब्दः। एतेषु 'episteme' - शब्द एव आङ्ग्लभाषायाः 'knowledge' - शब्देन साकमभिन्नार्थकतां भजति। तस्मात् प्रमाणमीमांसा तथा Theory of knowledge इत्यस्या एव ग्रीक्व्युत्पत्त्यनुसारम् 'epistemology' - संज्ञा भवति। अपि च यवनानां 'sophia' पदमेव आङ्ग्लभाषायां 'wisdom' इति पदेन शब्द्यते। तत्तु "ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात्" इतिवत् प्रज्ञापदेन पराविद्येतिपदेन वा अनुवादमर्हतीति मन्ये। अस्यां प्रज्ञायां ये रमन्ते ते प्रज्ञानुरागिणः - lovers of wisdom (न केवलं शास्त्रानुरागिणः प्रमाणानुरागिणो वा) - एव philosophers इति अभिधीयन्ते। Philosophy इति यौगिकपदे प्रणयवाचक - philia - शब्दस्य विद्यावाचक - sophia - शब्दस्य च समावेशात्। यथा अस्माकमुपनिषत्सु विद्यया अमृतमश्नुते इति श्रूयते तथैव तत्रभवतामपि 'sophia'-शब्दाभिधेयां विद्यामधिगम्य

एव परमपुरुषार्थो निरतिशयसुखं वा, स्वातन्त्र्यं वा, अपवर्गो वा प्राप्यत इति प्रसिद्धिः। मया तु अत्र knowledge - पदस्य संस्कृत-रूपान्तरं प्रमापदेनैव करणीयं, न तु ज्ञानपदेन इति कथं भूयोभूयः स्मार्यत इति प्रश्ने कृते प्रथमं तावत् वच्मि - ज्ञानपदं न knowledge - पदसमानार्थकम्। तस्य सत्यानृतसाधारणतया 'मिथ्याज्ञान'-पदेऽपि प्रयोगयोग्यत्वात्, knowledge - पदाभिहिते च अनृतत्वा-सम्भवात्। 'जानामि' इति पदं तु भ्रान्तैरपि तथैव व्यवह्रियते, यथा अभ्रान्तैः। परन्तु भूतकालीनस्वकीयज्ञानस्य मिथ्यात्वे उद्घाटिते, भ्रमज्ञानस्य बाधोत्तरकालीनदशायाम् 'अहं शुक्तिं रजतत्वेन अज्ञासिषम्', अथवा 'शुक्तौ मे रजतज्ञानमासीत्' इति ज्ञानपदं तु प्रकटीकृतमिथ्यात्वेऽपि ज्ञाने प्रयुज्यते। परन्तु यदा 'सूर्यः पृथिवीं परितः चङ्क्रम्यते' इति पुराकालिकविश्वासस्य अयथार्थत्वं प्रकटीभवति तदा ज्ञात्रा, अन्येन वा, 'I knew that the sun goes round the earth' अथवा 'He had the knowledge that the sun goes round the earth' - इति knowledge- प्रातिपदिकप्रयोगः अथवा know- धातुप्रयोगो तत्र आङ्ग्लभाषायाः **शिष्टप्रयोग**सम्मतो **न** भवति। तत्र सत्यानृतसाधारण-belief - पदेन अथवा think - धातुना 'I had the **belief** that the sun goes round the earth', अथवा 'He used to **think** that the sun goes round the earth' - इत्येव वक्तुमुचितम्। बाढ़म् आङ्ग्लभाषायामपि know इति धातुः ज्ञाधातुवदेव विविधेषु भिन्नस्थलेषु प्रयुज्यते। तत्र अस्य प्रयोगवैविध्यविषये दिङ्निर्देशः प्रकारत्रयेण क्रियते। कदाचित् कर्मसु कौशलम् अवबोधयितुम् 'He knows how to

use a computer', 'She knows how to cook' - इत्यादिवाक्येषु 'कर्तुं कुशलः' इत्यभिप्रायेण 'know' - धातोः प्रयोगो दृश्यते। संस्कृतभाषायां तादृशप्रयोगस्य विरलत्वेऽपि प्रादेशिकभारतीयभाषासु 'असौ तैलरथं चालयितुं जानाति', 'मम कन्या सङ्गीतं जानाति' इत्याकारकप्रयोगाः दृश्यन्त एव। तुमुन्प्रत्ययान्तधात्वन्तरेण साकं ज्ञाधातोः ('गातुं जानाति'-इतिवत्)..... कौशलार्थे प्रयोगः पाणिनि-सम्मतोऽपि भवति। ग्रीकभाषायामेवंविधशिल्पादिदक्षतारूपज्ञानस्य 'techne' - शब्देन उल्लेखो भवति। यद्यपि प्रमाणमीमांसायां तादृश- 'knowing how' - रूपकौशलात्मकज्ञानं न मुख्यतया विचार्यते, तथाऽपि अत्याधुनिके काले संस्कृतादिभाषाज्ञानं किं कौशलात्मकपारङ्गमत्वस्वरूपमथवा 'इदमित्थम्' इति वैशिष्ट्यप्रतीत्यात्मकमिति विवादो भाषादार्शनिकेषु प्रचलितः। अपि च व्यवहर्तव्यं ज्ञानं **विद्या**पदवाच्यम् आचरणीयं - Practical Knowledge, पुस्तकस्था या Theoretical Knowledge तादृशप्रयागार्हविद्यातो विशिष्यत इत्यपि एकः पक्षः समर्थ्यते दार्शनिकैकदेशिभिः, या तु ईदृग् - Knowing how - ज्ञानं - Knowing that - ज्ञानात् व्यवसा-यात्मकात् भिद्यते। 'घटो नीलः', 'ईश्वरोऽस्ति', 'पृथिवी सूर्यं परिक्रमते', 'जलं 0 डिग्री तापाङ्के हिमत्वं प्राप्नोति' इत्यादीनि ज्ञानानि Knowledge that इति पदसमूहेन अभिधीयन्ते। तत्र प्रामाण्याप्रामाण्यादेः प्रसङ्गोऽस्ति। कर्मकौशले च तत्प्रसङ्गो नास्ति। तृतीयोऽपि कश्चित् लौकिकप्रयोगो दृश्यते 'know' धातोः। तत्र साक्षात्परिचय एव ज्ञानपदेन सूच्यते। 'रामः हरिं जानाति', 'जानामि धर्मं न च मे प्रवृत्तिः' इत्यादिवत् 'John knows the

Prime Minister', 'I know this city' इत्यादि एकवस्तुज्ञानमेक-व्यक्तिज्ञानमपि knowledge - पदेन उच्यते। तत्र विषयतया विशेष्ये विशेषणसत्त्वं नोल्लिख्यते। तस्मात् कौशलज्ञानवत् इदं तृतीयप्रकारमपि ज्ञानं याथार्थ्यभाजनं ग्राह्यप्रामाण्याश्रयं न भवति। विषयत्वेन अत्र धर्मिमात्रोल्लेखात् तादृशज्ञानं मिथ्या न भवितुमर्हति। 'त्वामहं जानामि न जानामि वा' इति संशेतुं शक्यते, परन्तु 'त्वामहं जानामि, परन्तु मृषा जानामि' इति न वक्तुं शक्यते। ज्ञानप्रकारभेदममुम् अग्रे पुनरपि व्याख्यास्यामः।

आधुनिकप्रतीच्यप्रमाणमीमांसायां प्रमालक्षणविचारावसरे तावत् लक्ष्यरूपेण वैशिष्ट्यनिश्चयात्मकम् इदमित्थमित्याकारक-वाक्येन अभिलाप्यं द्वितीयप्रकारं (Knowing that) ज्ञानमेव गृह्यते।

तत्र प्राचीनपाश्चात्यविपश्चिदादिगुरुभिः सॉक्रातिस्महाभागैः तच्छिष्यप्लेटोमहाभागैश्च यत् यत् ज्ञायते प्रतीयते अध्यवसीयते, न तत् सर्वं प्रमाणज्ञानं, विपर्ययस्यापि ज्ञानत्वात्, पुनश्च यथार्थमपि ज्ञानं युक्तिहीनम् असम्यगुपायलब्धं न प्रमेति प्रदर्शितम्। ततःप्रभृति द्विसहस्रवर्षादधिकं यावत् प्रमायाः सामान्यलक्षणमित्थमेव परम्परागतं प्रचलति -

न्याय्ययथार्थप्रतीतित्वमेव प्रमात्वम्।

Knowledge is justified true belief.

अत्र न्याय्यत्वं नाम सोपपत्तिकत्वं सयुक्तिकत्वं वा, याथार्थ्यं नाम अव्यभिचारित्वम् अविसंवादो वा, प्रतीतिपदं तु विश्वासपरं

निश्चयपरं चेति पारिभाषिकतया एतत्पदत्रयस्य गूढार्थाः मन्तव्याः। उदाहरणमेकं गृहीत्वा अस्य लक्षणस्य पदव्यावृत्तिः करिष्यते -

असौ (कश्चित् ज्ञातृविशेषः) 'शशिनि नरचरणपातः समभवत्' (संक्षेपतः '*श*') इति प्रमिणोति।

सङ्क्षेपेण --'असौ *श* इति प्रमिणोति', नियमतस्तदा, केवलं तदैव, यदा --

१. असौ *श* इति प्रत्येति/अध्यवस्यति

२. *श* इत्येव वस्तुस्थितिः (सा प्रतीतिर्यथार्था)

३. *श* इति प्रत्येतुम् अस्य ज्ञातुः पर्याप्ता न्याय्यतासाधिका युक्तिरस्ति, (प्रकारान्तरेण, *श* इति प्रत्येतुमस्य अधिकारः अस्ति) - अस्य कृते *श* इति प्रत्ययो न्याय्यः, साक्षात्कृतविषयत्वात्।

अत्र संशयवारणाय प्रथमांशः, मिथ्यानिश्चयवारणाय द्वितीयोऽशः, काकतालीयसंवादवारणाय निर्युक्तिकयथार्थनिश्चयवारणाय च तृतीयांशो लक्षणे सन्निविष्टः। यदि कश्चित् संशयालुः शशिनि नरचरणपातो वस्तुतः अभवन्न वा इति विमृशति नासौ *श* इति प्रमावान्। यदा *श* इति वस्तुस्थितिर्नासीत्, द्विशतवर्षेभ्यः प्राक् ऊनविंशशताब्दे, *श* इति प्रमा कस्यापि नासीत्। यद्यपि *श* इति प्रतीतिर्यथार्था दृढा कस्यापि अस्ति परन्तु तस्याः प्रतीतेः हेतुत्वेन 'शशिनि दूरतः कलङ्कवत् नरचरणचिह्नानि दृश्यन्ते' इति अहेतुः कथञ्चित् प्रदर्श्यते तदा सा सत्या निश्चयात्मिकाऽपि

'श' इति प्रतीतिः प्रमा न स्यात्। असिद्धहेतुगर्भितविशेषणवत्तया सत्यप्रतीतेरपि अन्याय्यत्वात्। अस्मिन्नपि लक्षणे दोषमुद्भावयितुं दृष्टान्तोऽयमुत्प्रेक्ष्यते। [1]

हरिः शङ्करः उभौ सहान्तेवासिनौ कस्मिंश्चित् कार्यालये एकस्य एव पदस्य प्रार्थितया तस्मिन् पदे नियोगाय आवेदनं चक्रतुः। हरिस्तु शङ्करं स्वस्मात् योग्यतरं मन्यते। अपि च नियोक्ता स्वयं हरिमाहूय सखेदं वदति 'शङ्कराय पदमिदं दास्यामि' इति। तस्मात् हरिः न्याय्यतया इदं विश्वसिति शङ्करस्य आवेदनमेव सफलं भविष्यतीति। पदप्राप्तिविषये नियोक्तुर्वाक्यमेव न्याय्यत्वसाधकतमं प्रमाणम्। अन्यच्च, हरिः निमेषमात्रात् प्रागेव स्वयं साक्षाद्दृष्टवान् यत् शङ्करस्य कञ्चुकपुटके दशरूप्यकाणि सन्ति इति। तस्मात् हरेः निःसंशयप्रत्ययो जातः 'स एव पदमिदं प्राप्स्यति यस्य कञ्चुकपुटके दशरूप्यकाणि सन्ति'। न हि 'यो यो दशरूप्यकवान् स हि पदप्रापकः' इति हरेः प्रत्ययः। परन्तु 'अस्ति कश्चित् सफलः पदप्रापको यो हि दशरूप्यकवान्' इति विश्वासस्तस्य। प्रत्ययस्त्वयं निश्चयात्मकः, अपि च सयुक्तिकः, सप्रमाणः, न्याय्यश्च। आप्तोपदेशात् (नियोक्ता खलु पदनियुक्तिविषये यथार्थवक्ता उत्सर्गतो भवत्येव), प्रत्यक्षज्ञानात् च तस्य प्रतीतिरियं न्याय्या।

परन्तु अन्तिमक्षणे नियोक्ता स्वयं सत्यवादी सन्नपि स्वमतपरिवर्तनं कृत्वा हरये एव पदं यच्छति, न तु शङ्कराय। अपि च

अजानता हरिणा स्वकीयकञ्चुकपुटके दशरूप्यकाणि रक्षितानि। तस्मात् तत्पदे नियुक्तस्य जनस्य कञ्चुकपुटके दशरूप्यकाणि सन्तीति विश्वासस्तु यथार्थ एव। तस्मात् हरेर्ज्ञानं निश्चितप्रत्ययात्मकं, यथार्थम्, अपि च न्याय्यम्। परन्तु न्याय्ययथार्थप्रतीतित्वसत्त्वेऽपि अत्र हरौ प्रमाज्ञानं तथा knowledge -अस्ति इति वक्तुं न शक्यते। काकतालीयवदेतेषां लक्षणघटकधर्माणां तत्र समन्वयात्। तस्मादति-व्याप्तिदोषग्रस्तमिदं लक्षणमिति एड्मण्ड् गेटियर् (Edmund Gettier)-महोदयेन १९६३ अब्दे Analysis-पत्रिकायां स्वल्पाक्षरे क्रोडपत्रे प्रत्यपादि।[4] तेनैव सहस्राधिकवर्षमानितमिदं लक्षणं निराकृतमिति आधुनिकानां प्रमाणमीमांसकानां मतम्।

मणिग्रन्थे गङ्गेशेन विवेचितमत्र भ्रान्तप्रतारकवाक्यमपि दृष्टान्ततया ग्रहीतुं शक्यते। परन्तु तत्र महानेको मौलिकदृष्टिभेदो गेटियर्-गङ्गेशयोर्मध्ये उररीभवति। 'नद्यास्तीरे पञ्च फलानि सन्ति' इति भ्रान्तप्रतारकवाक्यात् यदि कस्यचित् नदीतीरवर्तिफल-पञ्चकविषयकं निश्चयात्मकम् अविसंवादि यथार्थं ज्ञानं जायते तदा तज्ज्ञानं प्रमा एव इति हि गङ्गेशस्य मतम्। परन्तु प्रमात्वस्य का कथा, अस्य ज्ञानस्य न्याय्यत्वमपि गेटियर्-प्रमुखैः पाश्चात्य-प्रमाणतत्त्वविद्भिर्नाङ्गीक्रियते। प्रतारकवाक्यानि उत्सर्गतः अनास्थाभाजनानि, अत्र पुनः स्वयं 'न सन्ति पञ्च फलानि नदीतटे' इति मिथ्याज्ञानवान् प्रवञ्चकः स्वयं यद्वदति तस्मिन् अनाप्तवचने आस्थां स्थापयित्वा अन्याय्या प्रतीतिरपि यादृच्छिकसंवादवशात् यथार्था प्राप्ता। न हि अन्याय्या प्रतीतिर्याथार्थ्यमात्रहेतुतः प्रमापद-

वाच्या भवति पाश्चात्यनये।

गेटियर्-महोदयेन यो दृष्टान्तः समुद्भावितः तत्र अस्ति याथार्थ्यन्याय्यत्वनिश्चयत्वानां त्रयाणामपि समन्वयः। तथाप्यसौ विश्वासो न प्रमा। न्याय्यतासाधकयुक्त्या सह अस्य याथार्थ्य-सम्पादकवस्तुस्थितेर्व्यवस्थितसम्बन्धाभावात्। यः शङ्करः पदं प्राप्स्यति, स एव दशरूप्यकवान् इति प्रतीतिः खलु न्याय्या, हरिः पदं प्राप्नोति, हरिरपि दशरूप्यकवान् इति प्रतीतिरेव (हरेः) नास्ति। परन्तु सा एव वस्तुस्थितिः। आद्या न्याय्यत्वसाधिका, द्वितीया अप्रतीता अपि याथार्थ्यसम्पादिका। परन्तु नास्ति एतयोः सामानाधि-करण्यम्। नास्ति अनयोरभेदः, कोऽपि सम्पर्को वा। तस्मात् चतुर्थः कश्चित् लक्षणघटकधर्मो योजनीयः। प्रमात्वं तस्मिन् ज्ञाने वर्तते, नान्यत्र - यत्र

१. ज्ञातुः प्रतीतिर्निश्चयात्मिका अस्ति,

२. ज्ञानविषयः / प्रतीतविषयश्च यथार्थः,

३. यत् प्रतीतं तत् यथार्थमिति विश्वसितुं तस्यैव ज्ञातुः न्याय्यत्वसाधिका युक्तिः हेतुर्वा अस्ति।

४. प्रतीतेर्याथार्थ्यं न्याय्यत्वसम्पादकयुक्त्या सह सम्बन्धशून्यं यादृच्छिककाकतालीयसम्बन्धवत् वा न स्यात्।

- एतत् लक्षणचतुष्टयं वर्तते।

इतःपरमपि प्रमालक्षणे बहवो दोषा आविष्कृताः। परन्तु प्रत्ययं, याथार्थ्यं, न्याय्यत्वं च विहाय प्रमात्वं न घटते इति प्रायः

सर्वेषामत्रास्ति ऐकमत्यम्। तस्मात् क्रमेण एतेषां प्रमात्वघटकधर्माणां विचार एव परवर्तिषु व्याख्यानेषु एकैकशः करिष्यामः।

आधुनिकप्रमाणमीमांसायाम् एतस्मात् प्रमासामान्यलक्षण-निर्णयात् भिन्नाः अन्येऽपि विषयाः मुख्यतया विचार्यन्ते। येषु येषु विशेषस्थलेषु लौकिकाः परीक्षकाश्च स्वकीयनिश्चयानां प्रमात्वं निरूढतया अभ्युपगच्छन्ति तेषां स्थलानामेकैकशो विमर्शनमपि प्रमाणमीमांसायाः कार्यरूपेण परिगणितम्। बाह्यप्रत्यक्षेण दृश्य-श्रव्यस्पृश्यपदार्थानामस्तित्वस्वरूपादिज्ञानमस्माकं जायत एव। तादृशबाह्यार्थप्रमासु प्रमासामान्यलक्षणस्य समन्वयः करणीयः। स्मृत्या अतीतविषयाणामनुमानेन च अनागतविषयाणाम् अन्तर्निरी-क्षणेन (अनुव्यवसायेन वा) स्वचित्तगतभावानां, कथञ्चिदपि परचित्त-गतभावानां, शुद्धबुद्ध्या गणितादिविषयाणां च याः प्रमितयः मनुष्येषु अनुभूयन्ते तासु प्रमालक्षणसमन्वयोऽपि बहुशङ्काकण्टकाकीर्णः प्रमाणमीमांसायाः मुख्यविषयो वर्तते।

ꩡ

## द्वितीयं व्याख्यानम्

# प्रतीतिविमर्शः

प्रणम्य प्रत्ययं विष्णुं प्रार्थये प्रत्ययान्वितः।
मां प्रत्ययं प्रसादः स्यात् वक्ष्ये प्रत्ययलक्षणम्।।

माये विद्ये मातृके मालिनि त्वं काये काये स्पन्दसे चित्कलात्मा।
ध्यायेयं त्वां कथं स्वस्फुरत्तां ध्यायेयं त्वां वाचमन्तर्नदन्तीम्।।

विनश्यच्छरीरे ममत्वप्रतीतिं
दृढां दुःखदां छेत्तुमेका शरण्या।
कृपा यस्य हेतुं विनैव प्रवृत्ता
तम् ओंकारनाथं प्रतीत्य प्रवर्ते।।

न्याय्यत्वे सति यथार्थत्वे सति प्रतीतित्वमिति प्रमायाः प्राचीनपाश्चात्यलक्षणे एड्मण्ड् गेटियर्-महोदयेन यः अतिव्याप्तिदोषो दत्तः तं दोषं सङ्क्षेपतो विचार्य प्रमालक्षणाश्रितं प्रथमं व्याख्यानमस्माभिरुपसंहृतम्। आदौ तस्य लक्षणस्य प्रतिपदव्यावृत्तिसमये 'प्रमा' पदम् आङ्गलभाषायाः knowledge - पदपर्यायत्वेन अत्र गृहीतमिति नैकशः अस्माभिः स्मारितः। तादृश्या एव रीत्या अद्यापि 'प्रतीति' पदं पारिभाषिकतया belief पदस्य संस्कृतरूपान्तररूपेणैव ग्रहणीयः। संस्कृतभाषायामपि 'प्रतीति' पदं निश्चयार्थकत्वेन प्रत्ययाभिन्नार्थकत्वेन वा भूयशो व्यवह्रियते। परन्तु प्रत्ययपदमपि बह्वर्थवाचकं भवति। बौद्धदर्शने तावत **कारण**मेव प्रत्ययपदेन अभिधीयते। शाक्यमुनिना

प्रतीत्यसमुत्पादमाश्रित्य देशना कृता। तथा हेतुप्रत्यय-अधिपतिप्रत्यय-समनन्तरप्रत्यय-आलम्बनप्रत्ययभेदात् समेषां चित्तचैत्यानां विशेषतः क्षणिकविज्ञप्तीनां कारणचतुष्टयमङ्गीक्रियते। अपि च व्याकरणे 'प्रत्यय' पदस्य योऽर्थः, तत्र नास्ति लेशतोऽपि निश्चयात्मकज्ञान-गन्धः। ज्ञानवाचकशब्दास्तु संस्कृतवाङ्मये बहवो दृश्यन्ते - 'बोधः', 'बुद्धिः', 'व्यवसायः', 'धीः', 'मतिः', 'संवित्', 'प्रतीतिः' इत्यादयस्तत्र प्रधानाः। मया त्वत्र "बलवदपि शिक्षितानामात्मनि अप्रत्ययं चेतः" इति कालिदासप्रयोगं मनसि निधाय निश्चयात्मकसुदृढस्वी-करणमभिप्रेत्य 'प्रतीति' शब्देन **belief** शब्दस्य अनुवादः कृतः। तस्मात् 'निश्चयः', 'व्यवसायः', 'विश्वासः', 'अध्यवसायः' - एते परस्परपर्यायाः शब्दाः 'प्रतीति' शब्दस्य समार्थकतया प्रयोज्या इति स्थिरीकृत्य प्रतीतिस्वरूपविमर्शः करणीयः। ईदृशी प्रतीतिर्यदा न्याय्या यथार्था च भवति तदैव सा नैयत्येन प्रमापदवाच्या भवति - इत्यत्र यथा भूयान् संशयो विवादश्च वर्तते, तथैव प्रमामात्रं प्रतीतिविशेष एव इत्यत्राऽपि विषये दार्शनिकाः संशेरते। 'काश्मीरे अद्यैव दश सैन्यानि व्यापादितानि इति अहं प्रमिणोमि', 'इदमित्थमिति प्रमावानहम्' इत्यादिस्थलेषु कैश्चन गुणैर्युक्ता प्रतीतिरेव आत्मनि वर्तमानतया उद्घुष्यत इत्यत्रापि अस्ति महान् विवादः। यदि प्रमा गुणयुक्ता प्रतीतिरेव स्यात् तदा अनुव्यवसायगम्या आन्तरक्रिया मानसावस्था वा स्यात्। परन्तु विषयाभिमुखिना प्रमात्रा परागेव पश्यता शपथमिव कुर्वता 'अहं जानामि', 'वेदाहमेतम्', 'अहं प्रमावान्' इत्यादिभिर्वाक्यैर्न काचिदात्मगता क्रिया गुणविशेषो वा

वर्ण्यते। आन्तरनिश्चयात्मकमानसव्यापारविवरणपरत्वेन प्रतीयमानानामपि तादृशवाक्यानां व्यवहारतः विवरणात्मकत्वाभावादिति विंशशताब्दमध्यभागीय- अक्स्फर्ड्-विश्वविद्यालयस्य दार्शिनिकाग्रगण्यानाम् ऑस्टिन्-महाभागानां (J.L. Austin) विचित्रः कश्चित् सिद्धान्तः। सङ्क्षेपतस्तस्यानुवादोऽत्र आदौ करिष्यते।

सूक्ष्मेक्षिकया लौकिकभाषाविश्लेषणादेव आन्वीक्षिक्याः समस्यानिरसनं भवति। तस्मात् 'जानामि', 'प्रमिणोमि' इत्यादिवाक्यानां लोकव्यवहार एव सूक्ष्मतया गवेषणीयः। न तु प्रमाणमीमांसकानामाज्ञामात्रेणैव प्रमालक्षणं निर्धार्यत इति तत्रभवतः ऑस्टिन्-महाशयस्य लोकभाषादर्शनगुरोर्मतम् (Ordinary Language Philosophy)। उत्तमपुरुषीयवर्तमानकालीनैकवचनात्मकवाक्यानां प्रथमतो द्विधा विभागस्तेन कृतः। तत्र खलु 'अहं जिघ्रामि', 'अहं गच्छामि', 'अहं भुञ्जे' इत्यादीनि विवरणात्मकवाक्यानि एकस्यां कक्ष्यायामन्तर्भवन्ति। 'अहं वदामि', 'अहं शपामि', 'अहं ते मृत्युदण्डं विदधामि', 'अहं प्रतिजानामि', 'अहं सम्प्रददे' इत्यादीनि क्रियासम्पादकव्याहरणानि अपरकक्ष्यायां गच्छन्ति। एतयोर्वैलक्षण्यमेवं दर्शयितुं सुशकम् - 'अहं गच्छामि' इति कथनादेव गमनं न भवति। 'गच्छामि' इति क्रियापदेन उच्चारणकर्तुः काचित् क्रिया वर्ण्यते, परन्तु न क्रियते। तथैव 'अहं जिघ्रामि' इति व्याहरणादेव घ्राणक्रिया न सम्पादिता। परन्तु 'अहं श्वः तव गृहम् आगन्तुं प्रतिजानामि' ('I promise to come to your house tomorrow') अथवा 'अहं कन्यामिमां तुभ्यं सम्प्रददे'

इति यदा बान्धवं प्रति, पित्रा विवाहकाले जामातरं प्रति वा उच्चार्यते, तदा तद्व्याहरणमेव प्रतिज्ञाक्रिया, तदुच्चारणमेव कन्यादानमिति गण्यते। मुसलमानसमाजे 'अहं त्वां त्यजामि' इति पत्नीं प्रति वारत्रयं व्याहरणमेव कलत्रत्यागः, परन्तु वैदिकसमाजे 'त्यजामि' इति 'गच्छामि' इतिवत् विवरणमात्रम् (Descriptive or Constative utterances)। यागकाले, पूजाकाले वा देवताभ्यः 'निवेदयामि', 'समर्पयामि' इति कथनमेव निवेदनं समर्पणमिति वैदिकानामपि आचारसिद्धोऽयं व्यवहारः। सन्ति च पुनः कानिचन स्वपदाभिहितक्रियासम्पादकानि वाक्यानि (Performative utterances) यैः काश्चित् वाक्योच्चारणभिन्ना बाह्या वा आभ्यन्तरा वा क्रिया न वर्ण्यन्ते, परन्तु स्वाभिहिताः क्रियाः स्वैरुच्चारणैरेव सम्पाद्यन्ते। वाक्योच्चारणमेव तत्र क्रियाकरणमिति लोके गण्यते। प्रकृते तु 'अहं प्रमिणोमि' ('I know') इति वाक्यमपि न विवरणात्मकं, परन्तु 'अहं शपथेन मम वाचं ददामि', 'सत्यं वच्मि', 'इदमित्थमेव', 'मां त्वं प्रमाणरूपेण ग्रहीतुं शक्नोषि', 'अहं प्रतिजाने' - इतिवत् सामाजिकक्रियासम्पादनात्मकं व्याहरणमिति ऑस्टिन्मतं यदि स्वीक्रियते, तदा 'प्रमिणोमि' इति न्याय्यत्वादिगुणवत्प्रतीतिरूपमानसावस्थायाः वर्णनमिति प्राचीनपाश्चात्यमतं व्युदस्तं भवति।

'I know that *p*' is not itself said to be a performative utterance in the strict sense by Austin, but it has the force of a performative utterance like 'I claim the right to be sure that *p*' or 'I give my word that

*p*' - something like व्यास saying at the end of the महाभारत "ऊर्ध्वबाहुः विरौम्येषः धर्मादर्थश्च कामश्च" ("I hereby announce that धर्म is the means to both अर्थ and काम"). It is such an announcement which would be made if he said "I know that from virtue comes both prosperity and pleasure". Thus it would not be a description of Vyasa's inner belief, a mere certainty felt by Vedavyasa but a public performative utterance, where Vyasa was giving his word and standing (hand-raising) guarantee for the truth of that claim - by the very act of uttering that sentence. It is like a curse or boon.

'अहं त्वां शपामि दुष्यन्तस्त्वां न स्मरिष्यति इति' - यदा दुर्वासा एवं वदति तदा शकुन्तलायाः शाब्दबोधो यदि ईदृशः स्यात् - 'मुनिरसौ अधुना मनसा यत् शापदानं करोति तस्यैव विवरणमिदं वाक्यम्' इति, तदा सा भ्रान्ता स्यात्। तद्वाक्योच्चारणमेव शापदानं, न तु अन्या मानसी क्रिया यस्याः विवरणमिदं वाक्यमिति। तस्मात् 'अहं प्रमिणोमि' इति वचनं स्वात्मनिष्ठप्रतीतेर्वर्णनमात्रं भवितुं नार्हति। प्रतीतिर्निश्चयात्मिका दृढात् दृढतरा वा भवेत्, सा वैयक्तिकी अनुभूतिरेव। न तया सह अस्ति प्रामाण्यस्य कोऽपि सम्बन्धः। 'किं कारणं तव प्रतीतेः' इति प्रश्नः तत्र युज्यते (Why do you believe this?)। यथा 'किं कारणं तव सुखानुभवस्य?' इति जिज्ञासा युज्यते। परन्तु प्रमाविषये 'किं

कारणं तव प्रमायाः?' (Why do you know? What are the causes of your knowledge?- would be an inappropriate question) - इति प्रश्नस्तु न समीचीनः। 'कथं केन प्रमाणेन कया वा युक्त्या प्रमिणोषि' (How do you know? What is your proof?) - अयमेव तत्र समीचीनः प्रश्नः। तस्मात् प्रमा न हि प्रतीतिप्रकारभेद इति केषाञ्चिदाशयः।

परन्तु प्रतीतिः स्वयमपि काचित् आन्तरावस्था, काचिन्मानसिकी अनुव्यवसायगम्या स्थितिरित्यपि कथं सिद्ध्यति? 'प्रत्येमि' इति क्रियापदबोध्यत्वादेव प्रतीतेः क्रियात्मकत्वं नानुमीयते, अनैकान्तिकत्वात् तस्य हेतोः। अत्र जयन्तभट्टो न्यायमञ्जर्यां ज्ञानमपि क्रिया इति मीमांसामतव्युदासाय "गडि वदनैकदेशे"[1] इति पाणिनिसूत्रं स्मारयन्नाह न हि तिङन्तमात्रात् क्रिया गम्यते, 'गण्डति कपोलम्' इत्यत्र कपोलस्य वदनैकदेशत्वमुच्यते न तु अस्ति गण्डनं नाम कश्चित् स्पन्दात्मको क्रियाव्यापारः। प्रासादस्तिष्ठति' इत्यादिवत् क्रियाभिन्नाऽपि अवस्था कदाचित् धातुवाच्या भवति। ('The house faces the east' does not imply that the house does an activity called facing the east). तथैव 'प्रत्येमि', 'निश्चिनोमि' इत्यादिभिराख्यातपदवाच्यत्वेऽपि प्रतीतिर्न काचित् क्रिया मनसि जायमाना, नापि कियत्क्षणिकज्ञानादिवदात्मनि घटमानो व्यापारो विशेषगुणो वा। [तस्मात् न्यायदर्शनाभिमते क्षणद्वयस्थायिनि निश्चयज्ञानस्वरूपे प्रायः पाश्चात्यदार्शनिकानाम् अरुचिरेव स्यात्।] तस्याः तत्तायाम् 'अधुना अहं होरात्रयं यावत्

ईश्वरोऽस्तीति विश्वसिमि परन्तु एतदनन्तरं घटपटादिज्ञानादिषु दत्तावधाने मयि ईश्वरोऽस्तीति विश्वासो न स्थास्यति' इति असङ्गतप्रलापोक्तिरपि सङ्गच्छेत्। सुषुप्तमपि पुरुषमुद्दिश्य 'अयं विश्वसिति सूर्यः चन्द्रात् परतरः' इति वक्तुमपि अनौचित्यमनुभूयेत, सुषुप्तस्य आत्मनि ज्ञानक्रियायाः असम्भवात्। परन्तु नानुभूयते तादृशी बाधा। सुषुप्तोऽपि श्रद्धावान् विश्वासीति एव कथ्यते। तस्मात् न हि विश्वासः (प्रतीतिर्वा) आन्तरगुणः, क्रिया, ज्ञानावस्था वा भवितुमर्हति।

अत्र द्विविधाः पुरुषधर्माः भवन्तीति Gilbert Ryle-महोदयेन पाश्चात्ये आत्मस्वरूपविचारजगति युगान्तरसाधके स्वग्रन्थे The Concept of Mind[2] नामके प्रदर्शितम्। तत्र 'पतति', 'पश्यति', 'धावति', 'पचति' इत्यादिक्रियापदानि कालनियमितान् सङ्घटनात्मकधर्मान् (Episodic) अभिदधति। परन्तु 'प्रीणाति', 'शक्नोति', 'प्रभवति', 'पारयति', 'निवसति' इत्यादिक्रियापदानि तथा 'वेगवान्', 'स्थितिस्थापकः', 'भङ्गुरः', 'द्रवणीयः' इत्यादिविशेषणानि संस्कारात्मकान्, शक्तिरूपान्, प्रावण्यविशेषरूपान् धर्मान् अभिदधति (Dispositional properties, tendency, capacity, ability etc.)। तत्र द्वितीयप्रकारस्य धर्मस्य विवरणं 'यदि-तर्हि' इत्याकारकवाक्यैर्दीयते। 'यदि भूमौ निक्षिप्यते तदा भज्यते' इत्येव भङ्गुरत्वस्य स्वरूपं, न तु तस्मिन् पदार्थे घटमाना काचित् तात्कालिकी भञ्जनात्मकक्रिया। तादृगेव कमपि सुषुप्तं छात्रमङ्गुल्या निर्दिश्य 'अयं मेधावी, व्याकरणे कृतभूरिपरिश्रमः, काशिकामाद्यन्तपर्यन्तां

जानाति स्मरति च' इति वक्तुं शक्यते; तत्काले निद्रितस्य तस्य स्मरणात्मकज्ञानाभावसत्त्वेऽपि स्मरणशक्तियोगात् यथायथप्रश्नोत्तरकरणसामर्थ्यसद्भावात्; 'यदि अयं जागरितः पृष्टः स्यात् तदा सम्यगुत्तरं दद्यात्' इति तर्कस्य युक्तत्वाच्च। प्रतीतिरपि तादृशी प्रावण्यस्वरूपा, सामर्थ्यरूपा, तत्तद्विषयकज्ञानशून्ये सुषुप्त्यादिकालेऽपि निश्चयात्मकस्वीकरणयोग्यतारूपा; कदाचित् धूम्रपानविषयकचिन्तावर्जितस्यापि जनस्य 'धूम्रपानात् आयुर्विनश्यति' इति प्रतीतिमत्त्वसम्भवाच्च। तस्मादेव वक्तुं शक्यते प्रतिक्षणम् ईश्वरसत्तामचिन्तयन्नपि कश्चिदास्तिकः स्वभावत उपासनादिप्रवण आगमेषु श्रद्धावान् ईश्वरोऽस्तीति विश्वसिति इति।

परन्तु साम्प्रतिकमिदं पाश्चात्यमतं द्विशतवर्षेभ्यः प्रागपि तस्मिन्नेव युरोपमध्ये अनुपादेयमासीत्। 'चैत्रः "सम्मुखे वृक्षं विराजते" इति प्रत्येति' इत्यस्य तत्कालीनदार्शनिकैरेवंविधमेव विश्लेषणमक्रियत। अधुनैव चैत्रस्य मनसि न केवलं सम्मुखस्य वृक्षस्य इन्द्रियोपात्ता स्मृत्युपनीतवृक्षत्वसामान्यसहकृता अवधारणा (idea) वर्तते, अधिकन्तु इदं तथ्यमेव इति तस्यामवधारणायां काचित् प्राणोज्जीवनयोजनापि क्रियते प्रत्ययनरूपेण अङ्गीकरणरूपेण कर्मणा (Assertion or act of judging)। तस्मात् सर्वाः प्रतीतय आन्तरक्रियात्मिका इति आधुनिकानां कृते पूर्वजानां पूर्वपक्ष आसीत् (Belief is a vivid idea adding life to an impression and idea by the act of assent)।

एकदा प्रचलितं 'प्रतीतिः काचित् मानसक्रिया' इति मतमधुना न समाद्रियते। उपादानहानादिभिः बाह्यक्रियाभिरेव प्रतीतिरनुमेया

प्रकटिता वा भवतीति अधुनाऽपि अनेकैर्दार्शनिकैरुच्यते। कः किं विश्वसितीति तस्य परिचयस्तु विश्वसितुर्व्यवहारतः, आचरणतः, कर्मसु प्रवृत्तिनिवृत्तित एव प्राप्यते। उत्सर्गतः निष्कम्पा प्रवृत्तिरेव प्रतीतौ मानम्। 'मैत्रो गृहे तिष्ठति' इति यदि चैत्रेण अध्यवसीयते तदा मैत्रं द्रष्टुकामः असौ तद्‌गृहाभिमुखमेव गच्छेत् न तु कार्यालयं प्रति वा अन्यत्र वा गच्छेत्। यादृशस्य ज्ञानस्य कल्पनायाः ज्ञानप्रावण्यस्य वा ज्ञातुर्व्यवहारे शब्दप्रयोगे अन्यासु च चेष्टासु कोऽपि प्रभावो न दृश्यते, तादृशं ज्ञानं प्रावण्यं वा प्रतीतिपदवाच्या न भवति। कदाचित् प्रतिबन्धकवशात् प्रतीतिसत्त्वेऽपि प्रवृत्तिर्न जायते, परन्तु असति प्रतिबन्धके 'दिवङ्गतस्यापि मम पितुर्जीवात्मा अधुनापि अस्ति' इति परलोकविश्वासवन्तो यथाकालं पितृतर्पणादिकं कुर्युरेव। अन्यथा अनुव्यवसायसाक्षिकोऽपि निश्चयः स्वात्मप्रतारणात्मक एव इति वक्तुं शक्यते। Ludwig Wittgenstein नामानः विंशशतकस्य महादार्शनिकप्रवराः स्वयं Austria-निवासिनः अपि इङ्ग्लेण्ड्देशस्य Cambridge-विश्वविद्यालये एव प्रायः स्थित्वा 'प्रतीतिः', 'प्रत्याशा', 'पीडा' इत्यादिमानसावस्थावाचकत्वेन प्रतीयमानानां पदानां बाह्यप्रवृत्त्यनुसारेण अर्थविश्लेषणं कृतवन्तः। तेषां प्रौढावस्थायाः मुख्यसिद्धान्तस्तावत् 'भाषायाः प्रयोगरीतिरेव पदस्य अर्थः' - "The meaning of a word is its use in the language"[13] - इति। पदेन केनचित् प्रयोक्तुर्मनसि स्थितः कश्चित् बौद्धार्थः, कश्चित् 'इदं-पदनिर्देश्यो बाह्यार्थो वा अभिधीयते' इति प्राचीनमतं निराकृत्य सामाजिकसमयानुसारी पदप्रयोगप्रकार एव

पदस्य अर्थ इति नूतनं मतं तेन स्थापितम्। तदनुसारेण 'प्रतीति' पद-प्रयोगप्रकारो लोकव्यवहारे तेन परिलक्ष्यते। प्रतीतिर्न तु चिन्तनम्। यदाऽहमस्मिन् काष्ठासने उपाविशं तदा नूनमेव मम प्रतीतिरासीत् इदमासनं मम शरीरभारं वोढुमलमिति। मदुपवेशनात् भग्नमिदं स्यादिति सम्भावनाऽपि न मया विमृष्टा। अत्र विपरीतसम्भावना-कल्पनाविरह एव प्रतीतिपदवाच्या न तु सर्वदा स्वातन्त्र्येण कस्यचित् निश्चयात्मकज्ञानविशेषस्य सद्भावः।

अपरं च, 'प्रत्यक्षमेव प्रतीतिजनकं भवति। तस्मात् **प्रत्यक्षमेव** प्रमा' इति मतं निराकुर्वन् प्लेटोमहोदयेन काचिद् युक्तिर्दत्ता। प्रतीतिरस्ति, दर्शनं नास्ति इति तु सर्वदैव दूरस्थस्वजनानां जीवितत्वं विषयीकृत्य दर्शयितुं शक्यते। प्लेटोमहोदयस्तु स्मरणं प्रमात्वेन स्वीचकार। तस्मात् अदृष्टेऽपि स्मृते पदार्थे प्रतीतिः प्रत्यक्षविरहिताऽपि सुतरां भवतीति तत्रभवता भण्यते। अपि च - चाक्षुषं दर्शनमस्ति परन्तु प्रतीतिर्नास्ति, संशयात्, विपरीतनिश्चयात् वा - एवमपि तेन दर्शितम्। चक्षुषा रूपमात्रं गृह्यते, श्रवणेन शब्दमात्रं गृह्यते, त्वचा च स्पर्शमात्रमनुभूयते। तद्रूपशब्दस्पर्शादिग्रहणमात्रं न तु प्रतीत्यात्मकं व्यवसायात्मकं वा भवति। तस्मात् तत्र प्रमात्वमपि न सिद्ध्यति, परन्तु 'अत्र नीलघटोऽस्ति', 'अयं शब्दो मधुरः', 'अयं शब्दस्तु असाधुः', 'असौ स्पर्श एतस्मात् स्पर्शात् कर्कशतरः' इत्यादिभिर्यदा अस्तित्वम्, इष्टत्वं, साधुत्वं, सादृश्यं, वैसादृश्यं वा बुद्ध्या परामृश्यते ज्ञायते च तदा एव तज्ज्ञानं प्रतीतिपदवाच्यम्। तस्मादुच्यते न तु प्रत्यक्षानुभवे प्रतीतित्वं प्रमात्वं वा अस्ति। परन्तु

प्रत्यक्षानुभूतविषयविषयकमानसचिन्तने मनसा अवधारणे विवेचनायां वा 'प्रतीति'पदस्य पारिभाषिकी शक्तिर्वर्तते [3]। प्रतीत्या वस्तुतत्त्व-सत्यासत्य-सत्त्व-सादृश्यादिधर्माश्च विषयीक्रियन्ते। ते तु न बहिरिन्द्रियगोचरास्तस्मात् इन्द्रियसंवेदनमात्रं कदापि प्रतीतिस्वरूपं न भवितुमर्हति। अस्मिन् विषये Wittgenstein-महाभागेन प्लेटो-कालात् सार्धद्विसहस्रवर्षानन्तरमद्भुतमेकमुदाहरणं प्रदत्तम्।

न केवलं दर्शनादेव प्रतीतिर्भवति परन्तु मनसा विशेषणादि-योजनापूर्वकं यदा विचार्य निर्णीयते तदा एव प्रतीतिर्जायते। सा एव किञ्चिद्रूपेण किञ्चित्प्रकारकतया दर्शनमित्यभिधीयते (not just seeing a figure but seeing it as a figure of some kind). दृष्टान्ततया निम्नाङ्कितं चित्रं गृह्यताम् -



यस्य इदं हंसमुखमिति प्रतीतिः स्वारसिकी तेन यद्दृष्टमपरस्य यस्य इदं शशमुखमिति प्रतीतिर्जाता तेनाऽपि तदेव दृष्टम्। प्रत्यक्षांशे तु भेदो नास्ति। निर्णये एव भेदः। तस्मात् प्रतीतिर्न बहिरिन्द्रियसाध्या, परन्तु निर्णायक-विचारणक्षम-बुद्धिसाध्या-**विमर्शात्मिका** इति उच्यते।

'चैत्रः मैत्रं विश्वसिति' - अत्र तावत् विश्वासविषयो मैत्रः।

नायं विश्वासो वाक्यार्थविषयकः। चैत्रस्य 'मैत्र' पदार्थविषयकप्रतीतिरेव अस्ति। 'काश्मीरे दश भारतीयसैन्यानि निहतानि अद्य' इति प्रतीतिः हरेरस्ति इत्यत्र इतिकारेण यद्वाक्यमुच्यते तस्य अर्थ एव प्रतीतिविषयस्तस्मात् वाक्यार्थप्रतीतिरिति सप्तमीतत्पुरुषसमासेन वयमेवंविधां प्रतीतिमभिधास्यामः। 'कर्णः स्वपितरं तेजस्वित्वेन प्रत्येति। सूर्य एव कर्णस्य पिता। कर्णः सूर्यं तेजस्वित्वेन प्रत्येति' इति वयं वक्तुं शक्नुमः। यद्यपि पितृपरिचयलाभात् पूर्वं कर्णेन स्वयमेवं नोच्येत। परन्तु 'पिता मे रथकार इति कर्णो विश्वसिति, वस्तुतः पिताऽस्य सूर्यः, तस्मात् सूर्यः रथकार इति कर्णो विश्वसिति'- एवं न अनुमातुं शक्यते। वाक्यार्थविषयकप्रतीतौ विषयाभिधानं तावत् प्रतीतिमतः स्वज्ञानानुयायि भवति। ननु 'अयमेवं प्रतीतिमान्' इति वदतो वक्तुर्ज्ञानानुसारेण वस्तुस्थित्यनुसारेण कथं प्रतीतिविषयो न व्यवस्थाप्यते? यतो हि वाक्यार्थप्रतीतिविषयः स्वयं प्रत्येतुः अनुभवानुसारेणैव निर्णेतव्यः। प्रतीत्युल्लिख्यमानविशेष्यताप्रकारतावच्छेदकानुसारेणैव प्रतीतिविषयाः व्यवस्थाप्याः। तस्मात् परकीयप्रतीतिविषयवर्णने वस्तुस्थितिर्न विचारणीया।

'स्वातन्त्र्यं कर्तुमकर्तुमन्यथाकर्तुं वा शक्तिः' इति Descartes अमन्यत। भगवता जीवमनसि यद् यज्ज्ञानं जनितं या या धारणा च स्थापिता तत् तज्ज्ञानं ताः सर्वाः धारणाः यथार्थाः, निर्दुष्टाः वर्तन्ते। भगवतः शुद्धसत्वस्वरूपत्वात्। परन्तु ताः योजयित्वा स्वेच्छावशात् स्वतन्त्राः जीवाः यदा प्रतीत्या व्यवस्यन्ति, विश्वसन्ति वा तदा एव क्वचित्क्वचित् ते भ्रान्तिषु पतन्ति। तस्मात् प्रतीतिस्थापना

तु अस्मदिच्छाधीना। न वयं तत्र विवशाः, निश्चयज्ञानकारणकलापैः शृङ्खलाबद्धाः।

अधुना अद्यातनस्य व्याख्यानस्य अन्तिमो विषयो विचार्यते। प्रतीत्या सह याथार्थ्यस्य कः सम्बन्धः? प्रतीतिर्यथार्थाऽपि भवति अयथार्थाऽपि भवति दृढा अपि प्रतीतिर्मृषा भवति। नास्ति विश्वासनैष्कम्प्येन सह याथार्थ्यस्य कोऽपि सम्बन्धः अस्माक-मनागतविषयिका प्रतीतिः प्रायशः अयथार्था भवति। 'आगामिनि वर्षे अहं ग्रन्थमिमं रचयिष्यामि' इति प्रतीत्या एव स्वपरिचायकपत्रेषु (Bio-data) लिख्यते। दृढाऽपि अनुव्यवसायसाक्षिका अपि मम सा प्रतीतिः अयथार्था भवितुमर्हतीति उत्कटैककोटिकसंशयो न केवलमस्माकमुताहो अस्मत्सुहृदामस्मदाचार्याणां तु जायत एव। इदमद्य मया प्राप्तमिमं प्राप्स्ये मनोरथमित्यादिभिः दृढ़ाशापाश-शतैर्बद्धाः वयमज्ञानिनः। न हि आशायाः निःसंशयत्वादेव सा सत्या भवति। परन्तु यदि मम प्रतीतिः स्यात् तदा मयैव सा अयाथार्थ्यसम्भावना न ऊरीकर्तुं शक्या इत्येव प्रतीतेः स्वभावः। तस्मात् नियमतः सर्वे स्वप्रतीतिं सत्यत्वेनैव जानन्ति। यद्यपि भूयोदर्शनेन मया सुतरामिदं ज्ञायते 'बन्धुरयं मम उपकारकः', 'श्वः सूर्योदयात् प्रागेव अहम् उन्निद्रो भविष्यामि', 'कुटुम्बोऽयं मदनुकूलः' इत्यादयो मे विश्वासाः प्रायेण भ्रान्तित्वेनैव बाधिताः। तथाऽपि अधुना यदि निश्चिता प्रतीतिर्जायते 'अयं मे परमबान्धवः कदापि मत्प्रतिकूलाचरणं न करिष्यति' इति, तदा 'एषा मे प्रतीतिः, परन्तु नेयं यथार्था' इति मया न चिन्तयितुं शक्यते। तस्मादेव

यद्यपि केचन शिष्टाचारवशात् आग्रहातिशयमप्रदर्शयन्तः स्वकीय-धर्मविश्वासान् नम्रतया प्रकटयन्ति 'वयं रामानुजीया एवं विश्वसिमः, परन्तु तद्वस्तुतो यथार्थो वा स्यात् अयथार्थो वा इति न जानीमः'। किञ्च अतिकैङ्कर्यमुररीकृत्य केचन वदन्ति 'यदि मदाचार्येण आदिश्यते तदा अयथार्थाऽपि सा एव प्रतीतिर्मया दृढमाश्लिष्यते' इति। परन्तु G.E.Moore-महोदयानामयं महान् एक आविष्कारो यः -

'चैत्रः "पृथिवी सूर्याद्बृहत्तरा" इति प्रत्येति परन्तु तस्य सा प्रतीतिर्भ्रान्ता' अस्माभिः इदं निर्बाधतया वक्तुं शक्यते। परन्तु चैत्रेण स्वयमेवं वक्तुं न शक्यते -

'अहं पृथिवी सूर्याद्बृहत्तरा इति प्रत्येमि परन्तु ममैषा प्रतीतिर्भ्रान्ता' इति। इयमुक्तिस्तु 'सर्वं मिथ्या ब्रवीमि' इतिवत् स्ववचनविरोधिनी। परन्तु कोऽत्र विरोधः? सामान्यतया मम कश्चित् कदाचित् विश्वासो भ्रान्त इत्यत्र नास्ति विरोधगन्धः।

अपि च 'इदं तथ्यं, परन्तु नाहमत्र प्रत्येमि' इत्यपि विरोधा-भासवदेव लक्ष्यते। यद्यपि 'यद्यत् सत्यं तत् सर्वमेव मया प्रतीतम्' इति अभिमानं तु सर्वज्ञे एव शोभते, तथापि 'नाहं सर्वज्ञः, किन्तु विप्रकृष्टचत्वरे वह्निरस्ति इति यथार्थोऽयमाशयः। परन्तु ममात्र प्रतीतिर्नास्ति' इति न वक्तुं शक्यते। स्वकीयप्रतीतिमात्रे ज्ञात्रा याथार्थ्यारोपः, यथार्थवाक्यार्थमात्रे च प्रतीत्यारोपः - अयमेव अहङ्कारस्य स्वभावः। परन्तु तथाऽपि दृढतमा निश्चिततमा न्याय्या

अपि प्रतीतिः क्वचिद् दौर्भाग्यवशात् अयथार्था इति भाविबाधकेन उद्घाट्यते इति न विस्मर्तव्यम्। याथार्थ्यं न हि पूर्णतया अस्माकं प्रतीतिनियमितम्। परन्तु बाह्यतः परतो वा प्रतीतावागतम्। इतःपरम् अस्य याथार्थ्यस्य एव स्वरूपं तृतीयव्याख्यानस्य विषयो भविष्यति। प्रतीतिविमर्शात्मके द्वितीयव्याख्याने आलोचिताः केचन मुख्यविषयाः विप्रतिपत्तयश्च सारसंक्षेपरूपेण पुनरुल्लिख्यन्ते -

## १. प्रतीतिस्वरूपम् (Nature of Belief)

क) प्रतीतिर्न क्रिया, कियत्क्षणिकमान्तरसङ्घटनं वा, परन्तु प्रतीतिर्नाम अङ्गीकरणप्रावण्यं, कस्मिंश्चिदाशये कृतनिश्चयत्वं, प्रवृत्तिजनकः स्वीकरणात्मकसंस्कारविशेषः।

a) Belief is not an action; it is not a momentary inner episode. But a belief is a tendency to accept, a disposition to hold on to a propostition and act accordingly.

ख) नापि प्रतीतिः प्रातिस्विकी वैयक्तिकी काचित् अन्तःस्था निश्चयानुभूतिः, किञ्च स्वजन्यहानोपादानादिप्रवृत्तिभिः प्रकटनयोग्या काचित् निजपरवेद्या जनस्थितिः। 'असौ एवं विश्वसिति' इत्यादि-वचनैरन्येन अन्यस्य आचरणदर्शनेनैव प्रतीतीनामवधारणात्।

b) Belief is not a subjective private psychological feeling of certitude. Rather, it is some publicly observable feature of a person, knowable by oneself as well as others, on the basis of activities such as wanting and

avoiding, since sentences such as: 'He believes such and such' - are regularly used by others to assert that another person has some such belief, on the basis of their observed behaviour.

ग) प्रतीतिर्न केवलं बहिरिन्द्रियजन्यप्रत्यक्षेण सम्पाद्यते, अपि च मनसा विचारेण, अस्तित्व-सादृश्य-याथार्थ्यादिधर्मान् विविच्य 'इदमित्थमेव' इत्यवधारणात्मिका वर्तते, तस्मात् प्रत्यक्षत्वं न प्रतीतित्वव्याप्यं नापि प्रतीतित्वव्यापकं भवति।

c) Belief cannot be a function, merely, of sensory perception. It involves a judgment of the form 'This is such indeed', formed after thinking by the mind, recognizing such properties as existence, similarity, truth etc. Therefore, not all beliefs are preceptual, and neither are all perceptions beliefs.

२. **प्रतीतिविभाजकविशेषणानां वैविध्यम्** (Different types of distinctions drawn between kinds of beliefs by distinct adjectives)

क) निर्विचारा अन्धप्रतीतिः, सविचारा सयुक्तिकप्रतीतिश्च

a) Irrational blind belief *versus* rational justified belief

ख) निष्कम्पा दृढा प्रतीतिः, सकम्पा संशयसहिष्णुप्रतीतिश्च

b) Unwavering firm belief *versus* shaky belief that permits future doubt

ग) बालकवत् सरलविश्वासः, परीक्षकवत् निराकृतशङ्को विश्वासश्च
c) Child-like simple faith *versus* an examined faith that is ready to fight opposition and doubt

घ) स्वेच्छापूर्विका प्रयत्नसाध्या प्रतीतिः, अवशा अनायासप्रतीतिश्च
d) Deliberate voluntary belief *versus* uncontrollable effortless belief

**३. ननु वयं प्रतीत्युत्पादनवर्जनविषये स्वतन्त्राः, प्रतीतिसामग्रीपरतन्त्राः वा?** स्वतन्त्राश्चेत् साक्षात्कृतविषयस्यापि कदाचित् इच्छावशात् स्वस्मिन् विपरीतप्रतीतिजननसामर्थ्यं प्रसज्येत। परतन्त्राश्चेत् 'एवं प्रत्येतुमुचितमितरथा न विश्वसनीयम्' इत्यादिप्रमाणशास्त्रीयविधिनिषेधयोरनुपपत्तिः। सीदनवमनादिषु अस्वतन्त्रासु क्रियासु औचित्यानौचित्यविचारस्य अनवकाशात्।

Are we free in the matter of inducing or rejecting a belief or are we totally dependent upon the factors that cause belief or disbelief in us? If we are free, then it should be possible to make ourselves believe the opposite of a fact even when we are directly witnessing that fact. If we are not free, then such epistemological injunctions and prohibitions as 'One ought to believe

P, if P follows logically from some other proposition that is reasonably believed to be true' - would be inexplicable. Because, one cannot meaningfully say 'should' or 'should not' about such uncontrollable actions as sweating or vomiting.

४) **पदार्थविषयकप्रतीतिवाक्यार्थविषयकप्रतीत्योः भेदः** (Distinctions between *de re* belief and *de dicto* belief)

समानशक्यविशिष्टवाचकान्तरेणापि स्वकीयविषयोपस्थापनं सहते तावत् पदार्थविषयकप्रतीतिः। तद्यथा पद्मपलाशलोचनं दुःखैकहारित्वेन विश्वसिति (मातृवाक्यात्) ध्रुवः। पद्मपलाशलोचन एव गरुडध्वजः। तस्मात् गरुडध्वजं दुःखैकहारित्वेन विश्वसिति ध्रुव इति आयातम्। परन्तु समानशक्यविशिष्टपदान्तरेण स्वकीयविशेष्यीभूतविषयोपस्थापनं नैव सहते वाक्यार्थविषयकप्रतीतिः। तद्यथा 'वैदेही हिरण्यहरिणं कामयते' इति प्रतीतिरस्ति रामस्य। हिरण्यहरिण एव मारीचः। तस्मात् 'वैदेही मारीचं कामयते' इति प्रतीतिरस्ति रामस्य - एवं न अनुमातुं शक्यते। वाक्यार्थविषयकप्रतीतिरेव विचार्यते मुख्यतया आधुनिकपाश्चात्यप्रमाणशास्त्रे।

In case of a *de re* belief, the content of belief can be presented by using other terms which refer to the same objects.

Thus, John believes the morning star to be bigger than the earth.

The morning star is identical with the evening star.

Therefore John believes the evening star to be bigger than the earth. This is O.K.

But we cannot argue in the following manner, in case of *de dicto* beliefs:

John believes that Mary likes to look at the evening star.

The morning star is the evening star.

Therefore John believes that Mary likes to look at the morning star.

It is mainly *de dicto* belief which is discussed in contemporary western epistemology.

**५. अस्माकं प्रतीतयो नियमेन यथार्थाः न भवन्ति।** सर्वेषु एव यथार्थवाक्यार्थेषु अस्माकं प्रतीतिरपि न सर्वदा जायते। तथाऽपि 'अहमेवं प्रत्येमि परन्तु ममेयं प्रतीतिर्न यथार्था ', 'इदं यथार्थं, परन्तु ममात्र प्रतीतिर्नास्ति' इति वा वक्तुं न शक्यते केनापि वैयात्यं विना, स्ववचनविरोधभयात्। कथमत्र विरोधावभास इति

"MOORE'S PARADOX" नाम्ना परिचीयत इयं समस्या।

Not all our beliefs are true. Not all true propositons are believed by us. Yet 'This is true, but I do not believe it', or 'I believe it, but it is not true' - would be self-refuting. Why? This is called 'MOORE'S PARADOX'



## तृतीयं व्याख्यानम्
## याथार्थ्यस्वरूपनिरुक्तिः

यो वेदवेद्योऽपि मुखानि यस्य
छन्नानि पात्रेण हिरण्मयेन।
कृष्णाय शुक्लाय सहस्रमूर्तये
सत्याय तत्त्वाय नमो नमस्ते ।।

सत्त्वभूतिनिजमूर्तिसम्भवत्तत्त्वभूतिपुरशालिपालिकाम्।
हस्तयुग्मधृतपुस्ततूलिकां बालिकां परिचिनोमि तां पराम् ।।

सीतारामपदद्वन्द्वे द्वन्द्वातीतपदप्रदे।
मत्सर्वस्वे धियं याचे सर्वस्वत्वप्रकारिकाम् ।।

याथार्थ्यं विहाय प्रतीतिर्न्याय्या निष्कम्पा अपि प्रमा न भवति। यद्यपि यदेव कश्चित् विश्वसिति तदेव यथार्थमिति मत्वा एव विश्वसिति, स्वकीयप्रतीतिमभिलपता 'इदमित्थमित्यहं प्रत्येमि' इति स्वीकुर्वता जनेन 'इदं न इत्थम्' इति तस्याः प्रतीतेरेव अयाथार्थ्यं तदानीमेव ज्ञातुं वक्तुं वा न शक्यते, स्ववचनव्याघातभयात् इति द्वितीयव्याख्यानस्य अन्तिमभागे MOORE'S PARADOX-प्रसङ्गे अस्माभिः प्रत्यपादि। तथाऽपि अस्माकं विश्वासाः नैकशो भ्रान्तियोग्या एव भवन्ति इति न केवलं लोकसाधारणैरप्रमाप्रचुरैर्ज्ञायते, परन्तु वैज्ञानिकैः परीक्षकैरपि सावधानतया सदैव स्वीक्रियते। एकस्मिन् काले युगे वा यत् सत्यमिति प्रतीयते, कालान्तरे युगान्तरे तस्यैव

बाधात् अतथात्वप्रतीतेः। तस्मादेव न्यायालयेष्वपि साक्षिवचनप्रमाण-विचारकसिद्धान्तादिकं परीक्ष्य यदा न्यायाधीशेन दण्डादिकं विधीयते, तदाऽपि 'अयमेव सापराध इति इतःपर्यन्तं प्राप्तेभ्यः प्रमाणेभ्यः प्रतीयते' - इत्येव सम्भावनया उच्यते। 'अहं जानामि, प्रमिणोमि वा' इति नोच्यते। भूतकालीयदुष्कृतिकर्तृत्वं कस्य आसीदिति याथार्थ्येन निश्चेतुमशक्यचरत्वात्, नैकशो न्यायाधीशसिद्धान्तस्यापि पश्चात् अयाथार्थ्योद्‌घाटनाच्च। अनागतविषयकव्यवसायेष्वपि सा एव गतिः। रोगचिकित्सादिषु आप्तत्वेन बहुमतः कश्चिद्वैद्यो यदि 'तव शूलवेदना श्वो दूरीभविष्यति' इति चैत्रं प्रति ब्रूते, तद्वाक्यजन्य-शाब्दबोधात् 'मम शूलवेदना श्वो दूरीभविष्यति' इति प्रतीतिर्बद्धश्रद्धस्य चैत्रस्य कृते न्याय्या भवति। परन्तु यदि परेद्युः सा वेदना न प्रशमिता तदा सा प्राग्दिवसीया प्रतीतिर्न्याय्याऽपि प्रमापदवाच्या नासीदित्येव प्रकटिता भवति। तस्याः अयथार्थत्वात्।

अपि च न्याय्याऽपि अनुमितिर्निश्चयात्मिकाऽपि कदाचित् सत्यां प्रतीतिं न जनयति। तद्यथा -

सर्वे काकाः असिता इति भूयोदर्शनेन स्थिरीकृत्य तदनन्तरं पशुशालायां श्वेतकाकं पश्यन् 'सितोऽयं पक्षी, तस्मात् नायं काकः' इति यदि कश्चिदनुमिनोति, तस्य अनुमानं तु निर्दोषं समीचीनं भवति। 'यदि सर्वे काकाः असिताः स्युस्तर्हि अयं श्वेतविहङ्गः काको न स्यात्' इति तर्कस्य प्रामाण्यात्। अत्र स्मर्तव्यं - बाधस्तु अनुमानदोषत्वेन पाश्चात्यैर्नाङ्गीक्रियते । तस्मात् एतत् परामर्शजन्यं

ज्ञानं युक्तितः समीचीनं न्याय्यमपि यथार्थं न भवति। तस्य पक्षिणो वस्तुतः श्वेतकाकविशेषत्वात्।

अत्र प्रमा (knowledge) लक्षणघटकः अयं 'यथार्थ'शब्द आङ्ग्लभाषायाः 'true'-शब्दस्य पर्यायत्वेन अस्माभिः प्रयुज्यते। ननु 'true' पदस्य 'सत्य'पदेन अनुवादः कथं न क्रियते इति चेत् 'सत्य'पदं संस्कृतभाषायां सत्तावदर्थे एव भूयशः प्रयुज्यते। तस्य real इति आङ्ग्लपदेन समार्थकता सङ्गच्छते। 'ब्रह्मसत्यं', 'सत्यं रजतम्' इत्यादिषु स्थलेषु ब्रह्मणः रजतस्य वा प्रमात्वसाधक-यत्किञ्चिद्विशेषणवत्त्वं नोच्यते। 'Brahman is correct', 'Silver is true' - इत्याद्यभिप्रायो वा नावधार्यते। तस्मात् यद्यपि 'सत्यं ब्रूयात्' इत्याकारकोपदेशेषु वाक्यविशेषणत्वेन 'true' पदपर्यायत्वेनैव सत्यपदस्य प्रयोगोऽपि दृश्यते तथाऽपि अनृतवचनानामपि वचनरूपेण तथ्यवचनसदृशत्वमेव, सत्यत्वात् (because false statements are as real as true statements) इति यथार्थपदेनैव 'true' पदमनूद्य वयमत्र प्रवर्तामहे। (प्रामाण्यं 'truth' इति कैश्चिदनूदितं।) इदं 'यथार्थ'पदं न केवलं प्रमाणशास्त्रस्य, परन्तु पाश्चात्य-तर्कशास्त्रस्यापि मुख्यविषयनिर्देशकत्वेन आधुनिकतर्कशास्त्रस्य जनकभूतेन जर्मन्-गणितदार्शनिकेन Gottlob Frege-महोदयेन निर्णीतः। सा एव समीचीना युक्तिर्यस्याः हेतुवाक्यानां याथार्थ्ये सति सिद्धान्तवाक्यस्य याथार्थ्यमवश्यम्भावि 'अवश्याङ्गीकर्तव्यम्' वा। 'That is a valid argument which is such that, if its premises are true then its conclusion must be and must

be accepted to be true' इत्येव समीचीनानुमानस्य लक्षणम्।

अत्र इदं विशेषतः अवधेयम्। याथार्थ्यघटितलक्षणलक्षितमपि समीचीनत्वं न हि याथार्थ्यरूपम्। (Validity is not truth.) 'सर्वे नराः मर्त्याः, परशुरामो नरः, तस्मात् परशुरामो मर्त्यः', 'यदि कपिः स्यात् तदा कविर्न स्यात्, मारुतिः कविरासीत्, तस्मात् मारुतिर्न कपिः', 'शेषनागादयः केचित् सर्पाः अपि देवाः, तस्मात् देवत्वं न सर्पान्योन्याभावव्याप्यम्', 'शशशृङ्गः अवयवविशेषः, शृङ्गत्वात्' इत्यादयः सर्वाः युक्तयः समीचीनाः। यतो यदि तेषां हेतुवाक्यानां याथार्थ्यं स्वीक्रियते तदा सिद्धान्तवाक्यानामपि याथार्थ्यमवश्यं स्वीकर्तव्यम्। परन्तु 'परशुरामो मर्त्यः', 'मारुतिर्न कपिः', 'शशशृङ्गः अवयवविशेषः' इत्यादयस्तु बाधिता एव। कदाचिदीदृशी समीचीनता आकृतिगतं याथार्थ्यमिति (formal truth) नाम्ना अभिधीयते। क्वचित् सिद्धान्तवाक्यस्य वास्तविकयाथार्थ्ये (material truth) सत्यपि यस्याः युक्तितः असौ सिद्धान्त आपादितः सा समीचीनत्वं न भजति।

तद्यथा 'सर्वे कर्णाटकदेशीयाः माध्वाः, व्यासतीर्थः कर्णाटकदेशीयः, माध्वत्वात्' - अस्यामनुमितौ निगमनत्वेन प्रयुक्तं सिद्धान्तवाक्यं व्यासतीर्थः कर्णाटकदेशीय इति यथार्थमपि अनुमितिस्तु असमीचीना, हेतोः सोपाधिकत्वात्। परन्तु 'सर्वे माध्वा कर्णाटकदेशीयाः, तस्मात् व्यासतीर्थः कर्णाटकदेशीयः, माध्वत्वात्' - अत्र व्याप्तिज्ञानस्य अयाथार्थत्वेऽपि युक्तिस्तु प्रतीच्यमते आकृतिमात्रतः समीचीना (formally valid)। यदि तादृशी व्याप्तिः स्वीक्रियते

तदा अनुमितिस्तु अप्रत्याख्येया। अपि च तस्याः समीचीनत्वे सिद्धान्तवाक्यस्य वास्तविकयाथार्थ्यं न प्रयोजकम्। परन्तु 'यदि...तर्हि' इत्याकारकयुक्तिशृङ्खलायाः सम्यक्त्वमेव तत्र कारणम्। इत्थं याथार्थ्यसमीचीनत्वयोर्भेदे प्रदर्शितेऽपि समीचीनतायाः लक्षणनिर्मितिस्तु 'याथार्थ्येन' एव कर्तुं शक्यते, नान्यथा।

'तत्र किं नाम याथार्थ्यम्? कस्य वा धर्मभूतम् इदं याथार्थ्यम्? अर्थस्य, ज्ञानस्य, उत तदुभयोः, वाक्यबोध्यस्य आशयस्य वा?' याथार्थ्यविचारस्य को वा उपायः? इति प्रश्नचतुष्टयं विचार्यते। (What is the nature of truth? Whose property is it? Is it a property of the object, of the cognition, of both, of a sentence, or of the proposition expressed by the sentence? What are the methods of testing truth?)

याथार्थ्यस्वरूपनिर्णयवेलायां त्रयो विषयाः सावधानतया स्मरणीया इति Bertrand Russell-महोदयेन स्वकीयदर्शन-समस्यावलीति विश्रुते प्रकरणग्रन्थे न्यरूपि।[1] (मूलग्रन्थोद्धरणं अन्त्यटिप्पण्यां द्रष्टव्यम्।)

तत्र **प्रथमतः** तज्जातीय एव पदार्थो याथार्थ्याश्रयो भवितु-मर्हति यज्जातीयः पदार्थः अयाथार्थ्यस्यापि आश्रयः कदाचित् भवति। याथार्थ्यं नाम अर्थवत्त्वं, तदेव सविषयकत्वं, तस्मात् सर्वे व्यवसायाः सविषयकत्वात् यथार्था एव इति रीत्या यैस्तु दार्शनिकैः सर्वस्य ज्ञानस्य नियमेन याथार्थ्यं प्रतिपादितं तैर्याथार्थ्यस्वरूपं न

सम्यगुप-लब्धम्। रसेल्-महाभागस्य ज्ञानमीमांसायां साक्षात्कारात्मकज्ञानं (knowledge by acquaintance) वाक्याभिलाप्यात् 'इदमित्थम्' इत्याकारकात् ज्ञानात् (knowledge of truths) भिद्यते। तत्र साक्षात्कारात्मकज्ञानं निर्विकल्पकत्वात् अप्रमातः प्रमातः अपि बहिर्भूतं, नियतस्वविषयग्राहकं भवति। तस्मात् तत्र नास्ति याथार्थ्यविचारप्रसङ्गः। विशेष्यप्रकारभेदरहितं तादृगालोचनं ज्ञानं कदापि अयथार्थं न भवति। तस्मात् तस्य याथार्थ्यस्यापि प्रसङ्गो नास्ति। सविकल्पिका विशेष्यप्रकारवती प्रतीतिस्तु साक्षात्काराद्भिद्यते। तस्यां प्रतीतौ एव याथार्थ्यस्य अयाथार्थ्यस्य च विचारः सावकाशः। यत्र अप्रामाण्यस्य तर्कितऽपि सम्भावना स्यात् तत्रैव प्रामाण्यस्यापि वृत्तित्वात् विशिष्टा प्रतीतिरेव याथार्थ्यस्य आश्रयीभूता, न तु आलोचनमात्रात्मकः साक्षात्कारः।

**द्वितीयतः** ज्ञानरिक्ते जगति सत्यत्वं वा अयाथार्थ्यं वा न स्यात्। ज्ञानस्यैव एते धर्मभूते। अस्माकं ज्ञानावधारणप्रत्ययनवचनादिचेतनकर्मसु क्रियमाणेषु एव याथार्थ्यरूपधर्मस्य उदयः स्यात्। अन्यथा प्रमातॄणां ज्ञानादिकमनपेक्ष्य बाह्यजगति जडवस्तुकलापे वा सत्ताद्रव्यत्वमूर्तत्वादिधर्माः सन्ति परन्तु याथार्थ्यमयाथार्थ्यं वा ज्ञाननिरपेक्षतया न वर्तते। जीवशून्ये कस्मिंश्चित् कल्पिते जडमात्रसारे जगति, वस्तूनि स्युः, वस्तुसन्निवेशवैचित्र्यात्, तत्संसर्गात्मकवस्तुस्थितयः (facts) अपि स्युः, परन्तु यथार्थाः अयथार्थाः वा प्रतीतयो न स्युः। तस्मात् याथार्थ्यं न तु जडवस्तुधर्मः, नापि वस्तुस्थितिनिष्ठम्।

**तृतीयतः** यद्यपि ज्ञानस्वभावासु प्रतीतिषु प्रतीतिजन्येषु च वाक्येषु एव याथार्थ्यं तिष्ठति, तथाऽपि ज्ञानाद् इतरं प्रतीतिनिरपेक्षं वस्तुसंसर्गमपेक्ष्य एव याथार्थ्यं वर्तते। अस्माकमात्मस्थितानां ज्ञानानां संशयत्व-निश्चयत्व-स्मृतित्व-अनुभवत्व-प्रत्यक्षत्व-परोक्षत्व-चाक्षुषत्व-श्रावणत्वादयो धर्माः बाह्यविषयान् अनपेक्ष्य एव ज्ञानेषु वर्तन्ते। परन्तु याथार्थ्यं न तादृशो धर्मः। तस्य प्रतीतिधर्मत्वेऽपि प्रतीतिबाह्य-वस्तुस्थितिसापेक्षत्वं स्वीकरणीयम्। अन्यथा 'निश्चिनोमि', 'स्मरामि', 'पश्यामि' इतिवत् 'यथार्था इयं प्रतीतिः' इत्यपि मानसेनैव अनुव्यवसायेन गृह्येत।

अस्य रसेल्-स्मारितस्य तृतीयस्य चिन्तापदस्य विषयस्य विवेचनादेव याथार्थ्यस्वरूपनिरुक्तौ प्रथमानुमतत्वेन **सारूप्यवादः** प्राप्यते। अत्र 'Correspondence Theory of Truth' इति प्रसिद्धपदकदम्बकस्य मया 'याथार्थ्यस्वरूपविषये सारूप्यवादः' इति अनुवादः कृतः। प्रतीत्या सह वस्तुस्थितेः सारूप्यमेव याथार्थ्य-मिति सारूप्यवादः प्रतीच्ये द्विसहस्रवर्षेभ्यः प्रचलितः श्रूयते।

अस्मद्देशेऽपि प्रामाण्यविषयकः सारूप्यवादः प्रचलित आसी-दिति मन्ये। अन्यथा मणिग्रन्थे प्रमालक्षणवादे महामतिना गङ्गेशेन 'अर्थसदृशं ज्ञानं प्रमा' इति पूर्वपक्षलक्षणं न विचार्येत। सामान्यतो याथार्थ्यं विवृण्वता लोकेन उच्यत एव 'यादृशो देवदत्तेन प्रतीतः अभिहितश्च, तादृश एव वस्तुस्वभावः। तस्मादुच्यते यथार्थाऽस्य प्रतीतिर्यथार्थमस्य वाक्यम् च' इति। Ludwig Wittgenstein-

महोदयेन स्वकीययौवनकालीनदर्शनप्रस्थाने 'अर्थसङ्घातप्रतिकृतिरेव वाक्यम्' ("A sentence is a picture of status of affairs") इति ब्रुवता यदि वाक्यस्य अर्थोपस्थापकपदानि तेनैव रूपेण वाक्ये सन्निविष्टानि भवेयुः येन रूपेण तत्पदवाच्यानि वस्तूनि जगति मिथः संसृष्टानि तिष्ठन्ति, तदा वस्तुस्थितिसारूप्यवशात् वाक्यं यथार्थं भवति इति प्रत्यपादि। परन्तु इङ्ग्लेण्ड्देशे रसेल्-महाभागाः, तत्समकाले जर्मनीमध्ये फ्रेगे-महाभागाः अपि सारूप्यवादनिराकरणाय अनेकानि खण्डनानि उद्भावितवन्तः। 'यथार्थ'पदमव्ययीभाव-समासनिष्पन्नम्। तस्मात् यथापदस्य सादृश्यभिन्नार्थकत्वं संस्कृत-व्याकरणशासनादेव निर्धारयितुमशक्ताः अनिच्छुकाः अपि पाश्चात्य-प्रमाणमीमांसकाः सारूप्यं सादृश्यापरनामतारतम्यभाजनं सम्बन्धं मन्यमानाः याथार्थ्यस्य तारतम्यं न सिद्ध्यति इति कृत्वा सा-रूप्यवादं निराचक्रुः। यदि केनचित् शिल्पिना दिवङ्गतस्य श्रीपट्टाभिरामशास्त्रिपादस्य प्रतिकृतित्रयं विरच्यते, तत्र एकस्मिन् चित्रे शास्त्रिपादेन सह मन्दसादृश्यमस्ति, द्वितीयं तु सदृशतरं, तृतीयं सदृशतममिति वक्तुं शक्यते। परन्तु याथार्थ्ये तादृशाल्प-त्वबहुलत्वादिकं न युज्यते। तस्मात् याथार्थ्यं न सारूप्यम्।

अपि च एकया रीत्या भ्रान्तमपि ज्ञानं स्वविषयेण सह सदृशम्। उभयोः सत्तया अविशेषात्। अन्यया च रीत्या प्रमाऽपि स्वविषयात् असदृशी घटोऽयमिति प्रमायाः आत्मगुणत्वात् तद्विषयी-भूतस्य च घटस्य जडद्रव्यत्वात् इति वक्तुं शक्यते। तस्मात् सारूप्यवादे अतिव्याप्तिरव्याप्तिश्च प्रसज्येते।

पुनरपि - 'चैत्रो मैत्रो वा उद्याने अटति' इति वाक्यस्य याथार्थ्यं केन बाह्यवस्तुसन्निवेशेन सह सारूप्यात् निरूपयितुं शक्यत इति दुर्निरूप्यं भवति। मैत्रेण एकाकिनाऽपि यदि उद्याने अट्यते तथाऽपि वाक्यमिदं (प्रतीतिरियं वा) यथार्थं (यथार्था वा) भवेत्। परन्तु चैत्रभ्रमणेनापि तथैव तस्य याथार्थ्यं भवेत्। चैत्रभ्रमणं तु मैत्रभ्रमणात् असदृशम्। तस्मात् वाक्यस्य सादृश्यमुभयत्र एव अस्ति इति वक्तुं न शक्यते। तस्मात् सारूप्यवादस्य भित्तिरूपं प्रतीति + वस्तुस्थित्योः सादृश्यं दुर्निरूप्यं। सादृश्यवादश्च दुरुपपादः।

अस्मिन्नेव प्रसङ्गे फ्रेगे-महोदयेन भूयसा विचारेण न केवलं सारूप्यरूपं याथार्थ्यलक्षणं, परन्तु सर्वाणि याथार्थ्यलक्षणानि एव दूषयित्वा निराकृतानि; यद्यपि फ्रेगे बाह्यार्थसत्त्ववादी अभवत्। एवञ्च बाह्यार्थसत्त्ववादिनः प्रायशो ज्ञानबाह्यार्थयोः सारूप्यात् एव याथार्थ्यं भवति, न तु ज्ञानान्तर्गतस्वभावादेव इति मन्यन्ते। तथापि फ्रेगे-महोदयेन बाह्यार्थसत्त्ववादे स्वीकृतेऽपि बाह्यार्थसारूप्यात् ज्ञानानां वाक्यानां वा याथार्थ्यमिति मतमञ्जसा प्रत्याख्यातम्।

तस्य पर्यनुयोगस्य व्याख्यानाय आदौ सारूप्यमेव लक्षणं गृहीत्वा उच्यते - 'सा प्रतीतिर्यथार्था या वस्तुस्थित्या सह सादृश्यं भजते' इति। लक्षणस्य पर्यवसानं भवति अत्रैव - 'सा एव प्रतीतिर्यथार्था यया सह वस्तुस्थितेः सादृश्यमस्ति इति प्रतीतिर्यथार्था' इति। परन्तु इदं लक्षणमात्माश्रयेण वा अनवस्थादोषेण वा ग्रस्यते।

अस्य बीजं खलु अयमाशयः। याथार्थ्यं नाम तत्र तद्वत्ता। सा तु वैशिष्ट्यमात्रस्यैव स्वभावः। यदि लक्षणघटकविशेषणानां लक्ष्ये वृत्तिरेव वैशिष्ट्यरूपा भवेत्, तदा याथार्थ्यमनाश्रित्य कस्याऽपि धर्मस्य कस्मिन् अपि धर्मिणि वृत्तिः प्रदर्शयितुं लक्षणस्य च समन्वयः कर्तुं न पार्यते। तस्मात् याथार्थ्यमादौ ज्ञात्वा एव याथार्थ्यस्य लक्षणे क्रियमाणे विचार्यमाणे च आत्माश्रयः स्यात्। यदि वैशिष्ट्यस्य स्तरभेदात् याथार्थ्यभेदः अपि कल्प्यते तदा च अनवस्था स्यात्।

सादृश्यस्थले अर्थमनतिक्रम्य वर्तमानत्वमित्यपि यदि याथार्थ्यस्य लक्षणं ध्रियते तथाऽपि असौ एव आक्षेपो याथार्थ्यलक्षण-निरूपणप्रत्याशां दूरे निक्षिपति। तस्मात् अत्याधुनिके प्रतीच्यदर्शने याथार्थ्यं लक्षणेन न निरूपयितुं शक्यते - Truth is not definable[2] इति एव अनेकेषां Donald Davidson-प्रभृतिदार्शनिकानां मतम्।

ज्ञानातिरिक्तबाह्यवस्तुसत्त्वनिषेधपराः पाश्चात्यविज्ञानवादिनः सारुप्यवादे काञ्चित् अपरां त्रुटिं पश्यन्ति। यदि याथार्थ्यं ज्ञानेन सह ज्ञानबाह्यस्य वस्तुनः सादृश्यं स्यात् तदा कथं वयं स्वकीय-ज्ञानराशिमात्रपरिवृताः 'इदं ज्ञानं प्रमा' इति निर्णेतुं शक्नुमः? प्रतीतेर्बहिरागत्य जगत्पर्यवेक्षणात् सारूप्यं तदभावो वा निर्णीयत इति चेत् जगत्पर्यवेक्षणमपि ज्ञानमेव, तदपि अपरां प्रतीतिमेव जनयति। तस्मात् न हि ज्ञानेन सह अर्थानां सादृश्यं परन्तु ज्ञानेन सह ज्ञानान्तरस्य सामञ्जस्यं संवादो वा याथार्थ्यस्य प्रकृतस्वरूपमिति याथार्थ्यविषये सामञ्जस्यवादः (Coherence

Theory of Truth) युक्ततर इति केषाञ्चिन्मतम्। विंशशतकस्य प्रथमदशके Hegel मतावलम्बिनां Joachim, Bradley - प्रभृतीनां British-दार्शनिकानां याथार्थ्यविषये प्रतीतीनां, ज्ञानानां च, परस्पराविसंवाद एव याथार्थ्यमिति एतन्मते प्रतिपादितमासीत्। बाह्यार्थभङ्गवादिनां विज्ञानाद्वैतवादिनां च दारुणशत्रुः वस्तुसत्त्ववादी भेदरत्नपरिरक्षणैक-व्रतः Bertrand Russell वदति - अस्मिन् सामञ्जस्यवादे द्वौ महान्तौ दोषौ स्त इति।

यद्यपि परस्परं सुसमञ्जसः कश्चिदेकः प्रतीतिप्रचयो वाक्यार्थानां वा विन्यासो निर्मीयते, तस्मिन् प्रतीतिसमूहे अन्तर्विरोध-विवर्जिते एका प्रतीतिरपरायै प्रतीत्यै स्वसामञ्जस्यानुग्रहात् 'यथार्था इयम्' इत्यपि पदवीं दास्यति। परन्तु तत्समान्तरालतया एव अपरोऽपि तद्विरोधिप्रत्ययानां समूहः परस्परसुमञ्जसो विधातुं शक्यते। तत्रापि अन्तर्विरोधशून्यत्वात् ते प्रत्ययाः परस्परसमर्थनमपि प्राप्यन्ते। ईदृशी एव स्थितिर्भवति ज्योतिर्विज्ञाने। अकस्मात् ब्रह्माण्डमारब्धं बृहद्विस्फो-टनादनन्तरमिति (big bang) एकः पक्षः। एतत्पक्षीयाः स्वमत-सुसमञ्जसान् विचारान् प्रस्तूय परस्परं समर्थयन्तः प्रतीतिप्रचयं निर्मितवन्तः।

अपरश्च - अनादिब्रह्माण्डवादिनां steady state-वादिनां पक्षः। Quantum mechanics-मध्येऽपि द्रष्टृसापेक्षगतिस्थिति-शीलाः विद्युत्कणिका इति एकः पक्षः, अस्माभिरज्ञेयत्वेऽपि सति अनिर्णीतगतिस्थितिविशेषशालिन्यः विद्युत्कणिका इति अपरः पक्षः;

एतयोर्मध्ये अन्यतरस्य प्रतीतिसमूहस्य विनिगमनाविरहात् अन्तःपरस्परसुसमञ्ज-सत्त्वात् उभयोरेव अन्तर्गतानां प्रतीतीनां प्रामाण्यं प्रसज्येत। परन्तु तासां मिथो विरोधात् सर्वेषां कृते अनिष्टः अयं प्रसङ्गः।

अपि च 'सामञ्जस्य'पदस्य कोऽर्थ इति विचार्यमाणे ययोर्द्वयोर्मध्ये एकं यदि यथार्थं स्यात्, तर्हि अपरं यथार्थं न भवितुमर्हति, तौ असमञ्जसौ। तादृशस्य असामञ्जस्यस्याभाव एव सामञ्जस्य-मिति प्राप्यते। तस्मात् सामञ्जस्येन याथार्थ्यस्वरूपवर्णनमपि अन्योन्याश्रयदोषेण दुष्टमिति अपर आक्षेपः।

अमेरिका-महादेशे विशेषतो हार्वर्ड्-विश्वविद्यालये विंशशताब्दे William James-महोदयादारभ्य सम्प्रतिकालपर्यन्तं याथार्थ्यं नाम समर्थप्रवृत्तिजनकत्वमिति तृतीयं मतमेव प्रबलतया प्रतिपाद्यते। तस्यापि दोषाः रसेल्-प्रभृतिभिः बहुशः प्रदर्शिताः। यया प्रतीत्या प्रवृत्तिरेव न जन्यते तादृशी उपेक्षाबुद्धिरस्मिन् मते कदापि यथार्था न स्यात्। परन्तु 'नद्याः तीरे पञ्चफलानि सन्ति' इति केनचित् अनशनता उपवासेन स्वमरणमिच्छता जैनमुनिना यदि प्रमीयते, तस्य ज्ञानस्य याथार्थ्यं कथं प्रवृत्तिसामर्थ्ये न लक्षयितुं युज्यत इति जिज्ञासा निरुत्तरा इव भाति।

अपि च कदाचित् भ्रमादपि प्रवृत्तिः सफला भवति इत्यादि-सौगतप्रमालक्षणखण्डनावसरे जयन्तादिभिर्बहुधा खण्डितमिदं मतम्। सारूप्यवादस्य, सामञ्जस्यवादस्य, प्रवृत्तिसामर्थ्यवादस्य च निरा-

करणं दृष्ट्वा अतिसाम्प्रतिकमेकं याथार्थ्यलक्षणं प्रतीच्यदार्शनिकैः प्रतिपादितम्। तदेव उपस्थाप्य अद्य तावद्विरमामि।

'यथार्थ-' इति अकिञ्चित्करं व्यर्थमेकं विशेषणम्। 'हिमवतो गङ्गा प्रवहति' इति प्रतीतिर्यथार्था। अस्य अर्थस्तु अतिसरला - 'हिमवतः गङ्गा प्रवहति' इत्येव। तस्मात् इतिकारलोपात् यस्य व्यर्थविशेषणत्वमभिव्यज्यते तदेव याथार्थ्यम्। यथा 'ओम्', 'बाढम्', 'आम्' इत्यादिपदात् यत् पूर्वमुक्तं तस्यैव अनुवादः स्वीकृतिर्वा क्रियते, तथैव 'नीलो घट इति सत्यम्' - इत्यस्य 'नीलो घटः' अर्थः। 'सत्यं', 'तथ्यं', 'यथार्थम्' इत्यादिविशेषणैस्तु कोऽपि विशेषो न अभिधीयते। मूलवाक्यस्य अर्थे मनागपि अर्थान्तरं न युज्यते। तस्मात् याथार्थ्यस्य स्वरूपविषये अन्यां कुसृष्टिं विहाय स्वार्थव्यर्थतया एव यथार्थपदस्य सार्थकता इति एव Redundancy or Disquotational Theory of Truth इति परिचीयते। इतिकारलोपात् 'यथार्थ-पदस्य व्यर्थविशेषणत्वपरिज्ञानादेव याथार्थ्यस्वरूपं व्याख्यायते इति मतं किञ्चित् भिन्नप्रकारेण हर्विच्- (Horwich) महोदयेन च प्रतिपादितम्। लाघवयुक्त्या वाक्ययाथार्थ्यख्यापनस्य मूलवाक्यार्थे एव पर्यवसानमित्येव मतम्।

ॐ

# चतुर्थं व्याख्यानम्
# प्रतीतेर्न्याय्यत्वविचारः

शब्दातिगः सर्वशब्दैकवाच्यः
'अर्थे'ति 'सत्ये'ति च श्रूयमाणः।
न्यायाय निःशेषगुणैकसिन्धवे
श्रीशेषतल्पाय नमो नमस्ते।।

ओंकारपञ्जरशुकीमुपनिषदुद्यानकेलिकलकण्ठीम्।
आगमविपिनमयूरीम् आर्यामन्तर्विभावये गौरीम्।।

शास्त्रे वादे निगमशिरसि प्रेरयित्वा धियो नः
जाड्यं बुद्धेर्हरति चरणाम्भोजरेणुर्हि यस्य।
मन्त्रार्थं तं भुवनशिवदं दक्षिणामूर्तिरूपं
सीतारामं गुरुमिह भजे श्रीमदोङ्कारनाथम् ।।

**पाश्चात्यप्रमाणशास्त्रीयशब्दानां पर्यायवाचिनः पूर्वप्रतिज्ञाताः पारिभाषिकशब्दाः**

| | | |
|---|---|---|
| Knowledge | = | प्रमा |
| Belief | = | प्रतीतिः/ प्रत्ययः/ व्यवसायः/ विश्वासः |
| Justification | = | न्याय्यत्वम् |
| True | = | यथार्थः |
| Proposition | = | आशयः |

| | | |
|---|---|---|
| Foundationalism | = | मूलप्रत्ययप्रतिष्ठतावादः |
| Coherentism | = | अन्योन्यसंसक्तिवादः |
| Reliabilism | = | नियतनिर्भरणीयादुष्टकारणजन्यतावादः (आस्थास्थापनयोग्यप्रमाणजन्यतावादो वा) |

### १. याथार्थ्य-न्याय्यत्वयोर्विवेकः

यथार्थानुभवत्वमात्रं प्रमालक्षणत्वेन नाङ्गीकर्तुमिच्छन्ति पाश्चात्यदार्शनिकाः। यदि साक्षाद्द्रष्टुराप्तस्य उक्तिमश्रुत्वाऽपि केनचिदन्धेन 'पुरोवर्त्ति पुष्पं लोहितम्' इति यदृच्छया व्यवसीयते, पृष्टश्चेद् उच्यते वा, अपि च तदैव काकतालीयसंवादवशात् पुष्पमपि वस्तुतो लोहितमेव तत्पुरतस्तिष्ठति, तस्य दृष्टिहीनस्य रक्तपुष्पप्रत्ययस्य याथार्थ्येऽपि सति, नासौ प्रत्ययः पाश्चात्यदृष्ट्या प्रमा-(knowledge)-पदवाच्यः, तस्य न्याय्यत्वाभावादिति अस्माभिः प्रथमे एव व्याख्याने सुस्पष्टतया प्रत्यपादि। यदि यथार्था स्यात् तदा कथं न न्याय्या स्यात्, कथं वा सा प्रतीतिस्तद्वति तत्प्रकारिका विषयमव्यभिचरन्ती अपि अप्रमा (not knowledge) इति न्यक्क्रियते इति जिज्ञासा चेदुच्यते। चाक्षुषप्रत्यक्षशक्तिरहिते प्रमातरि तज्जातीयरक्तपीतादिरूपप्रमायाः नैयत्येन असम्भवात् एतत्स्थले साक्षाद्द्रष्टुराप्तस्य वाक्यात् परोक्षज्ञानप्राप्तेरपि अनवसरात् तादृशसत्यविश्वासस्यापि निर्युक्तिकत्वात् 'अयमन्धः कुसुमं रक्तत्वेन विजानाति, प्रमिणोति वा' इति सम्यग्ज्ञानवाचकक्रियापदप्रयोगे सर्वैरेव विमर्शकैः अस्वारस्यमनुभूयते। तस्मादुच्यते यथार्थोऽपि अयं निश्चयो

न प्रमा। भङ्ग्यन्तरेण तदेव मतमेवं समर्थयितुं सुशकम्। यदि पुष्पं रक्तरूपवदस्ति तदा पुष्पं रक्तमिति प्रतीतिस्तु यथार्था एव। परन्तु यस्य प्रतीतिशालिनो ज्ञातुरेतादृशरूपादिविषये निःसंशयप्रत्यय-मर्जयितुमधिकार एव नास्ति तस्मिन् 'अयं प्रमिणोति' वा, 'असौ प्रमाता' वा इति वाक्यं न प्रयुज्यते (Knowledge is the right to be sure)। निश्चयज्ञाने तस्यैव अधिकारोऽस्ति यः 'कथं ज्ञायते' इति पृष्टः स्वकीयनिश्चयसमर्थनाय प्रमाणानि, युक्तिकलापम्, उपपत्तिं वा प्रदर्शयितुमलम्। केन प्रमाणेन, कया वा युक्त्या भवता पुष्पं लोहितमित्यवसितमिति पृष्टः सन् यद्ययमन्धः 'कुतश्चिद्धेतोः अनुमिनोमि' इति वा, 'श्रुतं मया भ्रमविप्रलिप्साकरणापाटवरहिता-दाप्तपुरुषादत्र रक्तपुष्पं वर्तते' इति वा प्रतिवक्तुमशक्तः, 'रक्तं पुष्पमिति कथनात् पुण्यं मे स्याद्' इति वा 'यदा अहं पुष्पं किं रूपमिति पृष्टः तदा अकस्मात् लोहितमिति मम मनसि अभासत' इति वा 'लोहितं विना अन्यरूपवाचकं नाम नाहं जानामि' इति वा प्रलपति, तदा सुतरां प्रकटीभवति प्रतीतिरस्य अन्याय्या इति।

इत्थं न्याय्यत्वं याथार्थ्येन सह सम्बद्धमपि याथार्थ्याद् भिन्नो धर्मः। एवं यथा यथार्था धीरपि अन्याय्या भवितुमर्हति तथा न्याय्याऽपि प्रतीतिः कदाचिद् अयथार्था भवति इति आधुनिकप्रतीच्यप्रमाण-तात्त्विकानां मतम्। अस्य दृष्टान्ततया इदं ग्रहीतुं शक्यते। एकदा केनचित् स्वभावतः सत्यवादिना एतावत्कालपर्यन्तं नियतप्रमाज्ञान-शालिना आप्तेन प्रातः यथार्थमुक्तं 'मुख्यमन्त्री अद्य राजधान्यामास्ते' इति। तदाकर्ण्य मयि प्रतीतिर्जाता मुख्यमन्त्री राजधान्यां वर्तत

इति। मध्याह्नकाले मया स्वचक्षुषा राजधान्यां मुख्यमन्त्रिसदनस्य पुरतस्तस्य स्वकीयं वाहनं दृष्ट्वा अनुमित्याऽपि दृढीकृता इयमेव प्रतीतिः। तदनन्तरमकल्पितपूर्वतया सर्वेषामगोचरतया च मुख्यमन्त्री वायुयानेन राजधानीतो बहिः प्रस्थितश्चेत् असौ राजधान्यामस्ति इति प्रतीतिर्मे भ्रान्ता, परन्तु सर्वशा न्याय्या एव। नियमेन यथार्थ-प्रतीतिजनकेनैव उपायेन शब्दप्रमाणेन अनुमानप्रमाणेन च मया अयं निश्चयः प्राप्तः। 'कथं वेत्सि' - इति पृष्टः सन् आप्तोक्ति-मुत्कटसम्भावनात्मकव्याप्तिविशिष्टलिङ्गदर्शनादिकमपि युक्तितया प्रदातुमहं शक्नोमि। परोक्षप्रमाणैरधुनाऽपि मुख्यमन्त्री राजधान्यामस्ति इति एव मया प्रत्येतुमुचितम्। न तु तस्य तत्र अधुना अनवस्थानविषये किमपि प्रमाणमस्मत्सविधे वर्तते। राजधानीतस्तत्रभवान् बहिर्गत इति व्यवसाय एव अधुना मत्कृते अयौक्तिकः अन्याय्यः स्यात्। परन्तु यथा अन्याय्या अपि पूर्वस्मिन् दृष्टान्ते अन्धस्य रूपप्रत्ययो दिष्ट्या सत्य अभवत्, तथैव न्याय्या अपि ममेयं प्रतीतिर्दौर्भाग्यवशात् असत्या जाता।

## २. ज्ञानस्य सम्यक्त्वं पुरुषप्रयत्नाधीनप्रामाण्यं च न्याय्यत्वेन एव जायते, न तु याथार्थ्येन -

तत्त्वज्ञानं विद्याऽपरपर्यायं पुरुषार्थतया उपदिशन्तो यदा वयं 'प्रमात्मकप्रतीतिरेव ग्राह्या, अप्रमात्मिका तु त्याज्या' इत्याकारकं विधिवाक्यं व्याहरामः तदा प्रमात्वघटकं न्याय्यत्वमिदं हि मुख्यतया यत्नेन सम्पादयितव्यमिति अस्माकमभिप्रायः। युक्तिहीनं प्रमाणैर-परीक्षितं ज्ञानं रुचिकरमपि (तद्यथा 'मम पुत्रात् बुद्धिमत्तरो बालकः

तस्य विद्यालये कोऽपि नास्ति' इति। यथा गीतासु उक्तं भगवता "कोऽन्योऽस्ति सदृशो मया" इति अज्ञानविमोहः) त्याज्यम्। असम्यक्प्रतीतिरनुकूलाऽपि वर्जनीया। न्याय्या, सोपपत्तिका, सम्यक्प्रतीतिः, निर्दोषकरणजन्या, विचारेण सुपरीक्षिता, समर्थनीया प्रतीतिरेव आश्रयणीया इति एव प्रतीतीनां साधुत्वासाधुत्वविचारविधौ न्याय्यप्रत्ययनं कर्तव्यत्वेन निर्दिश्यते। अन्याय्यं सुखकरमपि मा विश्वसिहि इति निषेधश्च क्रियते। तत्र सत्यत्वं याथार्थ्यं वा वस्तुतन्त्रत्वात् विधिविषयतां न भजति। यद्यपि याथार्थ्यं प्रतीतेरेव गुणत्वेन ख्यायते तथापि तत् प्रमातुः प्रयत्नाधीनं न भवति, वस्तुतन्त्रत्वात्। यः पुरुषतन्त्रो व्यापारस्तत्रैव यत्नः कर्तुं शक्यते। स्वकीयज्ञानविषये संशयदूरीकरणेन प्रतिकूलतर्कादिनिरासेन निश्चयदार्ढ्यं च सम्पाद्य तदतिरिक्ततया तस्य निश्चयस्य तद्वति तत्प्रकारकत्वं साधयितुं प्रयास एव न कर्तुं पार्यते, न करणीयोऽपि। अन्यथा इत्थमनिष्टमापतेत् - देवदत्तस्य प्रतीतिर्जाता 'यज्ञदत्तो ममार' इति। यज्ञदत्तग्रामवासिभ्यो जनेभ्यो वाक्यार्थबोधद्वारा अवगम्य यदि प्रतीतेरस्याः प्रमापकयुक्तिकलापमनुमापकहेतूंश्च नानुसन्धाय तस्याः प्रतीतेर्याथार्थ्यमेव सम्पादयितुं तत्परः स्यात् देवदत्तः, तदा मम प्रतीतेर्विशेष्यो यज्ञदत्तः कथं प्रकारीभूतमृत्युधर्मवान् स्यात् तथैव यत्नशीलः स्यात्? तस्मात् स्वकीयविश्वासस्य प्रामाण्यसम्पादनाय देवदत्तेन यज्ञदत्तस्य मृतिरेव साधनीयत्वेन आपद्येत। न तु अयं दृष्टान्तः, अयं विषयो वा परिहासविजल्पितोयमिति उपेक्षितव्यः। क्वचिदन्याय्यप्रतीतिमन्तो जना आग्रहातिशयात् स्वकीयविश्वासान्

यथार्थीकर्तुं वस्तुस्थितिमेव अन्यथाकर्तुं प्रयतन्ते। यथा अस्मिन् मम गृहाङ्गणे ग्रामदेवी अस्मिन्वृक्षे आविर्भूता इति निर्युक्तिकां निष्प्रामाणिकां प्रतीतिमाश्रित्य तस्य याथार्थ्यं प्रकटयितुमप्राकृत-सङ्घटनानामायोजनं करोति कश्चिदर्थलुब्धः प्रतारकः। तस्मात् दृढस्यापि निश्चयस्य न्याय्यत्वमेव इच्छेत् प्रेक्षावान्, पृथक्तया याथार्थ्यं न भावयितुं यतेत। 'अहं घटमिदं ताम्रत्वेन विश्वसिमि' इति प्रतीतिमेव पुनरुक्तिवत् 'यथार्थमिदमयं ताम्रघट एव' इति निश्चायनेन को लाभः? यत्ने कृतेऽपि न्याय्यो विश्वासः कदाचित् मिथ्या स्यात्। तादृशात् अयाथार्थ्यहेतोः प्रमाता न भर्त्सनीयो भवति। रोगशून्यः कश्चित् सुखी तरुणो यदि अद्य जीवितोऽस्ति तदा श्वोऽपि असौ जीविष्यति इति प्रतीतिर्न्याय्या भवति। तस्मादेव बन्धुभिः सह 'श्वस्त्वां मिलिष्यामि' इति प्रतिज्ञा क्रियते अस्माभिः। तादृशमना-गतकालस्थायित्वं जानन्तो न वयमन्याय्यप्रतीतिमन्तः। परन्तु तादृशस्यापि व्याधिविरहितस्य तरुणस्य अकस्मात् यदि परेद्युः मरणं स्यात्, तदा 'जीविष्यति' इति प्रतीतेः सम्यक्त्वं न्याय्यत्वं वा न हीयते। केवलं याथार्थ्यं बाधितं भवति। इत्थं प्रतीतेः न्याय्यत्वमात्र-मभ्यासप्रयत्नपरीक्षणविचारसाध्यं भवति, न हि तस्याः वास्तविक-याथार्थ्यम्। तस्मात् ज्ञानीयसाधुत्वासाधुत्वविचारपरेण प्रमाणशास्त्रेण मुख्यतः प्रतीतिधर्मभूतं न्याय्यत्वमेव निरूपणीयमिति प्रतीच्यदार्शनि-कानामेकदेशीयानां मतम् (Not truth but justification is the central concern of epistemology)।

### ३. न्याय्यत्वस्य किं लक्षणं, किं वा स्वरूपम् ?

William Alston नामक इदानीन्तनः कश्चित् अमेरिका-युक्तराष्ट्रियः प्रमाणतात्त्विकः 'बौद्धिकगर्हणीयत्वाभावो न्याय्यत्वम्' इति न्याय्यत्वलक्षणं विचारयति। 'Justification is freedom from intellectual blameworthiness'. बौद्धिकगर्हणीयत्वं नाम एवं जायते। 'अस्य कूपस्य जलं सुपेयं रोगबीजशून्यं च' इति विश्वासवान् यदि कश्चित् श्रद्धालुर्जनः कथमेवं ज्ञायत इति पृष्टो वदति 'मम तातस्य कूपोऽयं तस्मात् जलमस्य सुपेयमिति जानामि' - तदा तद्वचनहेतुभूतविश्वासश्च न प्रमात्मकः, अन्याय्यत्वात्। यतो हि तातस्वत्वं न तु सुपेयजलवत्त्वेन व्याप्यधर्मो भवति। दृष्टान्तोऽयं योगवासिष्ठमहारामायणान्मया गृहीतम्। परन्तु 'जलपरीक्षणयन्त्रेण पुनः पुनः परीक्ष्य संशोध्य प्रतिदिनं बहुवारं पीत्वाऽपि अस्माकं रोगाः न जाताः' इत्यादिसमर्थकयुक्त्या कश्चित् प्रतीतिमेनां द्रढयति, तदा असौ तादृशप्रतीतिविषयो बौद्धिकविचारेण गर्हणीयो न भवति। तत्र 'बौद्धिक-' इति विशेषणप्रयोगः किमर्थमिति चेत् 'गर्हणीयत्वाभावो न्याय्यत्वम्' इति मात्रं यदि लक्षणं स्यात् तदा अतिव्याप्तिः स्यात् इति उच्यते। आचारदृष्ट्या शास्त्रोक्त-धर्मदृष्ट्या च 'वाराणस्यां गङ्गाजलं परमं पवित्रम्' इति विश्वसन् कोऽपि गर्हणीयो न स्यात्। वाराणस्यां गङ्गाजलं दूषितमित्येव विश्वसन् गर्हणीयः स्यात्। परन्तु यदि निरपेक्षवैज्ञानिकरीत्या जलपरीक्षणादनन्तरम् अदग्धशवानां विण्मूत्रादीनां बृहच्छिल्पयन्त्रेभ्यो निर्गतानां क्लेदानां च मिश्रणात् काश्यां भागीरथीसलिलं दूषितं

स्वास्थ्यहानिकरं निश्चीयते, तदा 'काश्यां गङ्गोदकं दोषशून्यम्' इति विश्वासः शास्त्रदृष्ट्या अगर्हणीयोऽपि बौद्धिकदृष्ट्या गर्हणीय एव भवेत्। अतो बौद्धिकपदं प्रयुज्यते।

परन्तु लक्षणमिदमसौ Alston-महोदयः स्वयमेव विजहाति। गर्हाप्रशंसादिकं लोकव्यवहारसापेक्षं मानवगोष्ठीभेदेन भिन्नं च भवति। कस्याञ्चित् मध्ययुगीयक्रीस्तधर्मावलम्बिनां मध्ये आधुनिकभारतीय-ग्राम्यगोष्ठीषु अपि मूर्च्छारोगग्रस्ताः नार्यः (women with Epilepsy) 'एताः भूतग्रस्ताः' इति विश्वास एव तदीयबौद्धिक-विचारानुसारेण अगर्हणीय उचितश्च भवति। परन्तु तादृशविश्वासः तेषां कृतेऽपि न्याय्यो नास्ति। सत्यं, तस्मिन् मूर्च्छारोगकारणविषये अल्पज्ञानशालिनि युगे तादृशविश्वासो न गर्हणीयः। अधुनाऽपि ग्राम्यचिकित्सकेन केनचित् स्नायुविज्ञानानभिज्ञेन मूर्च्छारोगस्य कारणान्तरं यदि न ज्ञायते, तदा भूतप्रेतपिशाचादिना अदृष्टकारणेनैव तस्य उपपत्तिः क्रियते। तस्मात् तस्यां गोष्ठ्यां, तदानीं च काले गर्हानर्हत्वमस्ति एव। परन्तु तथापि प्रतीतिरियमन्याय्या इति वयं जानीमः। मूर्च्छारोगस्य स्नायविकविकारात्मककारणान्तरसत्त्वात्। अन्याय्यत्वं गर्हायोग्यत्वे हेतुर्भवति। न्याय्यत्वं च गर्हायोग्यत्वाभावे हेतुर्भवति। न्याय्योऽयं प्रत्ययः तस्मात् बौद्धिकगर्हणीयत्वाभाववान्। एवं सति तादृशगर्हणीयत्वाभाव एव न्याय्यत्वस्य स्वरूपं न भवितुमर्हति। अनन्तरं पर्याप्तप्रत्यायकहेतुमत्त्वं (justification is having adequate evidence), प्रतिकूलतर्कपराहतियोग्यताभावो न्याय्यत्वं (justification is unsusceptibility to defeating

counterfactual argumentation) इत्यादिलक्षणानि न्याय्यत्वस्य कल्पितानि।

तत्र तावत् प्रतिकूलतर्कपराहतियोग्यत्वं (defeasibility) नाम किम्? दृष्टान्तयोगेन तदेवेदानीं निरूप्यते। नगरात् नगरान्तरं गच्छति चैत्रः वेगवता तैलयानेन। पथपार्श्वे गोपुरशिखरध्वजादियुक्तेषु मन्दिरेषु दृश्यमानेषु 'इदमेकं मन्दिरम्', 'इदं चापरं मन्दिरम्' इति पुनः पुनः प्रतीतयो जायन्ते चैत्रस्य। परन्तु तेषु मन्दिरवदाभासमानेषु वस्तुषु कानिचिद्यथार्थत एव मन्दिराणि कानिचिच्च मन्दिरचित्रसमन्विताः काष्ठनिर्मिताः कृत्रिमप्राकारा एव भवन्ति। तेषां चित्रितप्राकाराणां पश्चात् देवालयं वस्तुतो नास्ति। परन्तु कुशलिभिः शिल्पिभिः ताः प्रतिकृतय एवमेव चित्रिताः यत्प्रकृतमन्दिरेभ्यः चाक्षुषप्रत्यक्षेण विवेकज्ञानं प्रायः असम्भवि एव। अत्र स्थले यदि कस्मिञ्चित् अमन्दिरविषये 'इदमेकं मन्दिरम्' इति ज्ञानं जायते तदा तु अयथार्थमेव तत् प्रमापदवीं नारोहेत्। परन्तु केषाञ्चित् पाश्चात्यप्रामाण्यवादिनां मते तादृशमन्दिरवदाभासमानेषु सर्वेषु वस्तुषु दृश्यमानेषु 'इदं मन्दिरमिति' इति अविचारितप्रत्येता यदि किञ्चित् **मन्दिर**मपि दृष्ट्वा 'इदं मन्दिरम्' इति अवधारयति, तदापि सा यथार्थप्रतीतिरन्याय्या एव स्यात्। यतः तस्यामवस्थायां यदि असौ विषयो मन्दिरं नाभविष्यत् यदि असौ मन्दिरचित्रमात्रमपि अभविष्यत् तदाऽपि चैत्रो 'मन्दिरोऽयम्' इति तदभाववति तत्प्रकारकप्रतीतिमानेव स्यात्। तस्मात् यथार्थत्वे सत्यपि प्रतिकूलतर्कपराहतयोग्योऽयं विश्वासः। केवलं काकतालीयसंवादवशात् यथार्थः, न तु

नियमतो यथार्थप्रतीतिजनकजातीयसामग्रीजन्यः। यदि अयं दृष्टान्तः स्वारसिको न स्यात् अपरेण उदाहरणेन प्रतिकूलतर्कपराहतिं बोधयितुं चेष्टे। कश्चित् कालनिर्देशकघटीयन्त्रः अस्मदज्ञाततया स्तब्धीभूतो निश्चलश्च। दिनत्रयात् पूर्वं मध्यरात्रौ द्वादशवादनकाले यन्त्रोऽयं विकलो जातः। परन्तु तन्न अस्माभिर्ज्ञायते। अद्य तावत् मध्याह्नकाले द्वादशवादनवेलायां तं यन्त्रं दृष्ट्वा अस्माभिः कालो निर्णीतः - 'इदानीं द्वादशवादनवेला समायाता' इति। प्रतीतिस्तु यथार्था, परन्तु अन्याय्या। कथमित्युक्ते सार्धद्वादशवेलायामपि यदि वयं पश्येम तदापि द्वादशवादनवेला समायातेति भ्रमः अस्माकं स्यात्, तस्मादेव प्रमाणात्। तस्मात् काकतालीयसंवादवशादधुना यथार्था प्रतीतिर्जनिता अनेन यन्त्रेण। तस्मात् न्याय्यत्वं सुदृढतया प्रतिष्ठापयितुमस्माभिरित्थमनुकूलतर्कः सज्जनीयः - 'यदि वस्तुस्थितिरन्यथा स्यात् तदा ईदृशी प्रतीतिरेव मयि न स्यात्, ईदृशी निर्दुष्टसामग्री अत्र उपस्थिता; यदि वस्तुत इदं मन्दिरं न स्यात् तदा मन्दिरत्वप्रकारकबुद्धिजनकसामग्री एव न स्यात्, ईदृश्यां सामग्र्यां स्थितायामेव मन्दिरप्रकारकप्रतीतिर्मयि जाता; यदि तदितरसङ्ख्यासूचितकालो वस्तुतः स्यात् तदा तदानीं तत्कालनिर्देशः अनेन यन्त्रेण कर्तुं शक्येत' - इत्थमनुकूलतर्केण समर्थनयोग्या प्रतीतिरेव न्याय्या।

अपि च, यदि ज्ञातुरवस्था दैवात् ईदृशी स्यात् यत्र प्रतीतिर्यथार्था वा स्यादयथार्था वा, सर्वासु अवस्थासु केनचित् यन्त्रेण मस्तिष्कनियन्त्रकेण वा या प्रतीतिस्तस्य मनसि आरोप्यते तामेव प्रतीतिमाश्लिष्य असौ निश्चयमनुभवति, संशयाभावात्;

प्रतीतेर्युक्तिमपि नानुसन्दधाति, तदा तादृशस्य ज्ञातुः प्रतीतिः कदाचित् सत्या विषयाव्यभिचारिणी अपि अन्याय्या एव।

## ४. प्रतीतेर्न्याय्यत्वस्वरूपविचारः

प्रतीतेर्न्याय्यत्वस्वरूपविषये बहवो विवादाः विगतपञ्चाशद्वर्षेभ्यः प्रचलिता आङ्ग्लभाषया प्रमाणशास्त्ररचयितृषु विमर्शकेषु। तत्र मतत्रयं मुख्यत उल्लेखनीयम्। सर्वासां प्रतीतीनां न्याय्यत्वं साक्षात् परम्परया वा मूलीभूतस्वतोन्याय्यप्रतीतिषु एव प्रतिष्ठितम्। 'पुरुषो दण्डी', 'जलेन वह्निर्निर्वाप्यते', 'धूम्रपानेन कर्कटरोगसम्भावना वर्धते' इत्यादीनां प्रत्ययानां न्याय्यत्वं परम्परया अपरेषु केषुचित् प्रत्यक्षज्ञानेषु प्रतिष्ठितम्। तादृशप्रत्यक्षप्रत्ययोऽपि निश्चिततरे प्रत्यक्षान्तरे प्रतिष्ठिता। एवं कृत्वा न्याय्यतासमर्थकहेतुपरम्परा क्वचिद्विश्रान्ता। अन्यथा अनवस्थापातात्। यत्र विश्रान्ता स एव चरममूलविश्वासो यः स्वतोन्याय्यः। तादृशस्य चरममूलप्रत्ययस्य न्याय्यत्वं न तु ज्ञानान्तरेण उत्पाद्यते ज्ञायते वा। 'अहमधुना सुखमनुभवामि', 'शिरसि मे वेदना', 'इदं वस्तु नीलरूपेण प्रतीयमानम्' इत्यादयो मूलप्रतीतयः (Basic beliefs) न कदापि बाधयोग्या भ्रान्ताः वा संशोधनीयाः वा भवितुमर्हन्ति। न तु तेभ्यो न्याय्यतरा इतरे प्रत्ययाः सम्भवन्ति। तेषां साक्षात् साक्षिवेद्यत्वात् बलवत्तरबाधकप्रमाणाभावात्, संशयस्य अनवकाशाच्च, 'अहमस्मि' इति प्रत्ययवत्। क्रीस्तीयविंशशताब्दस्य आद्ये मध्यभागे च Logical Positivists इति नाम्ना परिचिताः केचित् जर्मन्देशीयाः ऑस्ट्रियादेशीयाश्च इन्द्रियप्रत्यक्षैकमुख्यप्रमाणवादिनः तार्किका इदं मूलप्रत्ययप्रतिष्ठता-

वादमाश्रित्य भौतिकवैज्ञानिकपर्यवेक्षणानि प्रतिव्यक्तिनिष्ठसाक्षिवेद्य-तात्क्षणिकसाक्षात्प्रतीतिकलापं च सर्वप्रमाणज्ञानानां मूलभित्तिरूपेण विचार्य यद्वाक्यं यज्ज्ञानं साक्षात् परम्परया वा एतादृशभ्रमशङ्का-रहितमूलप्रतीतिभिः न समर्थितम् ताभ्यो युक्तितो न निःसृतं तत् न केवलमन्याय्यं, परन्तु निरर्थकं शब्दमात्रसारम् इत्येव अमन्यन्। अन्ये तु न केवलमेते परन्तु 'परस्परविरोधे न प्रकारान्तरस्थितिः' - Law of Excluded Middle - इत्यादीन् शुद्धतर्कशास्त्रीय-नियमानपि स्वतोऽन्याय्यमूलप्रत्ययकोटौ प्रावेशयन्। अनुमाननियमान् युक्तिनियमांश्च अनाश्रित्य मूलप्रत्ययेभ्यः तदुपरि अधिष्ठितानाम-पराणां न्याय्यप्रत्ययानामुपपादनक्रम एव दुस्साध्यः स्यात्। ननु 'अहं सुखी' इति प्रत्ययः 'अहं चिन्तयामि' इति प्रत्ययो वा कथं स्वतोन्याय्यो नियतभ्रान्तिरहितो वा परिगण्यते? तत्र केचिद्वदन्ति अहं सुखीति अनुभव एव सुखम्, अहं चिन्तयामीति इयमेव चिन्ता। तस्मात् ज्ञानविषययोरभेदात् तस्य नियतयाथार्थ्यमबाध्यत्वं च भवेत्। यथा 'अहं सुखी' इति ज्ञानं सदैव यथार्थं न्याय्यं च भवत्येव, तस्य स्वतःप्रामाण्यात्। प्रतीतीनां न्याय्यत्वं स्वयं ताभिरेव प्रतीतीभिः स्वत एव ज्ञायते उत परतः तासां कारणकलापस्य गुणदोषविचारेण, एतद्विषये पाश्चात्ये बहवो वादाः प्रचलिताः। अत्र अस्माभिः न्याय्यत्वमधिकृत्य मूलप्रत्ययप्रतिष्ठतावादः (Foundationalism) प्रतिपादितः। एतस्मिन्वादे नैके दोषाः पाश्चात्यदार्शनिकैरुद्भाविताः न्याय्यत्वसमर्थकयुक्तीनां परम्परा यत्र विश्रान्ता ते चरममूलप्रत्ययाः 'नीलरूपमधुना मम चाक्षुषप्रत्यक्षे प्रतिभाति', 'कश्चिद्घट इव

विषयः अवभासते' इत्यादयः। परन्तु एभ्य अवभासेभ्य आरभ्य केनोपायेन वयं 'नीलघटः अस्मिन् भूतले वर्तते', 'देवदत्तो नीलपटं परिधत्ते' इत्यादिज्ञानं बाह्यार्थगोचरं प्राप्नुमः? मूलप्रत्ययेभ्यः शाखाप्रशाखादिषु उद्गमनं कथं युज्यते? न्यायशास्त्रीयनियमान् वर्जयित्वा इतरे मूलप्रत्ययाः प्राय एकव्यक्तिगोचराः स्वतोवेद्याः अन्तःप्रत्यक्षजन्या भवन्ति। तेषाम् अयाथार्थ्यसम्भावनाविरह एव तान् प्रत्ययान् बाह्यविश्वतः अवगुण्ठ्य एकचित्तसाक्षिकान् करोति। अन्येषां बहुजनवेद्यानां विषयाणां ज्ञानं कथं न्याय्यं भवेत् इत्यस्य उपपत्तिः मूलप्रतिष्ठतावादे दुष्करा। तस्मात् न्याय्यत्वं भूयःप्रतीत्यन्तर-समर्थितत्वं तेभ्यः अनुमेयत्वं तदविरोधित्वं वा इति मतान्तरं सामञ्जस्यवादः (Coherentism) इति विश्रुतः।

अथवा प्रमाकरणानां गुणत एव प्रतीतीनां न्याय्यत्वं निस्सरति इति नियतनिर्भरणीयादुष्टकारणजन्यत्वमेव परतः उत्पन्नं न्याय्यत्व-मिति आस्थास्थापनयोग्य-प्रमाणजन्यतावादः (Reliabilism) इति अपरमपि मतम् अधुना प्रचलति। परन्तु अन्ततो गत्वा प्रतीतेर्न्याय्यत्वं येन अनुमानेन यया वा नीत्या प्रतिष्ठितं तस्याः अपि न्याय्यत्वं साधयितुं युक्त्यन्तरं सज्जनीयमिति कृत्वा अनवस्थाकल्पनात् न्याय्यत्वलक्षणस्य अनिर्णयात् वा काऽपि प्रतीतिः कदाऽपि न न्याय्या इति सार्वत्रिकसंशयवादः परस्मिन् व्याख्याने विचारिष्यते।

൫

## पञ्चमं व्याख्यानम्

# सार्वत्रिकसंशयवादस्तस्य निरासश्च

कः किं कुतो वेति विमृश्यमानाः
यमेव गूढं मृगयन्ति वेदाः।
यो गोचरो 'नैव वेद्मी'ति वेत्तु -
स्तं सर्वशङ्कातिगमच्युतं श्रये ।।

सुखं पश्यामि दुःखेषु प्रामाण्यं च विपर्यये।
यदविद्याविलासेन नौमि तां विश्वमातरम्।।

स्मृत्वा यच्चरणाब्जसुगन्धं छेत्तुमलं स्मरफणधरबन्धम्।
तम्भज विस्मर तदितरकामं स्मारं स्मारं सीतारामम् ।।

## प्रथमविभागः

## सार्वत्रिकसंशयवादविचारः

मणिग्रन्थे अन्यथाख्यातिवादपूर्वपक्षतया सर्वं ज्ञानं यथार्थमिति गुरुसम्मतमख्यातिवादं समुपस्थापयता गङ्गेशेन काचित् सङ्ग्रह-कारिका प्राभाकरगृहादुद्धृता -

"साकारपातादसतो न भानात् संविद्विरोधादथ हेत्वभावात्।
**धियामनाश्वास**भयाच्च नेष्टा यतोऽन्यथाख्यातिरतो यथार्था।।"

इति।

तत्र यत् 'धियामनाश्वासभयं' सूचितं तस्य भयस्यैव भूयिष्ठं विततं रूपं पाश्चात्ये अतिप्राचीनकालात् सार्वत्रिकसंशयवाद इति ख्यायते।

तत्र 'Skepticism' इति शब्दस्य सुरगिरा 'सार्वत्रिकसंशयवादः' इति रूपान्तरणं मया कृतम्। मूलशब्दस्तत्र 'Skepsis' इति प्रकृतेः व्युत्पाद्यते। तस्य अर्थस्तु ग्रीक्भाषायां सामान्यतो जिज्ञासा, पृच्छा, सम्यगन्वेषणमिति एव। परन्तु दार्शनिकपरिभाषारूपेण Skepticism इति पदं '**न्याय्ययथार्थनिश्चयात्मकप्रतीतिरसम्भविनी**' इति सार्वत्रिकसंशयवादे एव रूढम्। यदि इन्द्रियाणि, व्याप्तिज्ञानं, बाधनिश्चयविरहितसाकाङ्क्षसन्निहितानां स्मारितशक्यानां पदानां श्रवणं कदाचित् विपर्ययेष्वपि अस्मान् पातयन्ति, तर्हि प्रसिद्धप्रमाणजनितासु अपि प्रतीतिषु परीक्षकाणाम् अनाश्वास एव स्यात्। तादृशः सार्वत्रिकः अविश्वास एव संशयवादे पर्यवस्यति। अस्य दार्शनिकप्रस्थानस्य स्वरूपं निर्णेतुमादौ लोकसाधारणात् कादाचित्कसंशयात् तस्य वैलक्षण्यं प्रतिपाद्यते। यद्यपि संशयात्मा विनश्यतीति भगवता उक्तं तथाऽपि विचारपरायणाः प्राच्ये पाश्चात्ये च केचित् परीक्षकाः अभ्यस्तेषु जाग्रत्कालीनावितथप्रत्यक्षानुमानशब्दजन्येषु अपि ज्ञानेषु संशयबीजमुद्भाव्य तादृशसंशयव्युदासार्थमेव प्रमाणलक्षणविभागपरीक्षाणां प्रयोजनमस्ति इति वदन्ति। तस्मादेव अपवर्गसाधकस्य तत्त्वज्ञानस्य विषयभूतानां षोडशपदार्थानां मध्ये संशयस्याऽपि गणना भवति। तथा हि लोके केचित् सरलविश्वासवन्तः श्रद्धालवो भवन्ति, केचिद् वा स्वभावतः संशयाकुलाः। प्रायः सुशिक्षितानां स्वकीयविमर्शवतां मनीषिणां चित्तेषु एव विमर्शाऽपरपर्यायस्य संशयस्य ("बलवदपि शिक्षितानाम् आत्मनि अप्रत्ययं चेतः") प्राचुर्यं परिलक्ष्यते। शृगाल-चीत्कारात् पश्चादशुभं घटते न

वा, कारीरियागेन वृष्टिः भाव्यते न वा, फलितज्योतिषगणनामाश्रित्य अनागतजन्ममृत्युविवाहधनप्राप्त्यादिकं काकतालीयसंवादवशात् याथार्थ्येन क्वचित् ज्ञायते उत नैयत्येन न्याय्यतया प्रमीयते, एते राजनैतिकनेतारः कदापि सत्यं भाषन्ते न वा इत्यादिषु विशेषविषयेषु आधुनिकशिक्षितानां यत् लोकसाधारणं दोलायमानचित्तत्वम्, अविश्वासो वा, तस्य दार्शनिकपरिभाषायाः संशयवाद इति पदेन अभिधानं न युज्यते। तस्मात् न हि संशयमात्रं बहुषु विषयेषु सन्देहशीलता वा संशयवादः।

अपि च भूतकालविषये, अनागतविषये, परात्मगतसुख-दुःखादिभावविषये च अस्माकमानुमानिकं ज्ञानं कदापि न्याय्यं निश्चयात्मकं न जायत इति कृत्वा केषु केषु च विषयेषु दार्शनिका अपि नियमतः संशयो दुरुच्छेद एव इति मन्यन्ते। तादृशविषयविशेष-निरूपितसंशयवादोऽपि अत्र Skepticism पदेन नोच्यते। तादृश-विशेषविषयगोचरं लौकिकसंशयं प्रमेयविशेषगोचरैकदेशीयदार्शनिक-संशयं च व्यवच्छेतुं 'सार्वत्रिक' पदं योजयित्वा Skepticism इत्यस्य 'सार्वत्रिकसंशयवादः' इति अनुवादः कल्पितः।

अपि च संशयवादिनो न हि प्रमेयास्तित्वनिषेधपराः। नास्ति किञ्चित् सद्वस्तु, नास्ति आत्मा, नास्ति बाह्यं वस्तु, सर्वं शून्यमिति वा न ते वदन्ति। नास्तित्वनिश्चयस्यापि निश्चयात्मकत्वात् तस्य च सार्वत्रिकसंशयपरिपन्थित्वात् (अस्ति च nihilist - skeptic इत्यनयोः महान् भेदः)। केवलं, कस्मिन्नपि विषये कस्यापि प्रमाज्ञान-मस्तीति निश्चयस्य युक्तिमन्विष्य समर्थकप्रमाणत्वेन दीयमानानां

युक्तीनां न्याय्यत्वं निराकुर्वन्ति एते सार्वत्रिकसंशयवादिनः। यद्यपि जीवजगदीश्वरादिपदार्थाः वस्तुतः स्युस्तथापि अस्माकं तेषां प्रमितिः (knowledge) कदापि न जायत इति सार्वत्रिकसंशयवादस्य निष्कर्षः। अस्माकं विश्वासप्रावण्यं, जीविकार्थं प्रतीतिस्थापनाप्रयोजनं च अस्माकं प्रमाणसामर्थ्यात् नितरामतिरिच्येते; तस्मात् प्रायो यत्र दृढतया निर्दुष्टतया प्रमितं, यस्य आशयस्य न्याय्यतासाधकयुक्तयो बाधकतर्कनिरसनोपायाः वा न सन्ति, तदपि व्यवसीयते अभ्यासवशात्, आग्रहवशात्, रागद्वेषवशात्, धैर्याभावाच्च इत्येव तेषामभिप्रायः। न हि बहुवित्तव्ययायाससाध्ये दुष्करे कार्ये निष्कम्पा प्रवृत्तिरपि सर्वथा प्रमाजन्या भवति। यथा इराक्-देशे बहुजनविध्वंसकानि पारमाण-विकायुधानि गुप्तानि सन्तीति सर्वथा अन्याय्यामप्रमामेव आश्रित्य अमेरिकाराष्ट्रपतिना अतिदारुणे अमितवित्तव्ययपुरःसरे महासमरे स्वदेशीयाः परदेशीयाः अपि सैन्याः नियोजिताः। जनाः सहस्रशो व्यापादिताः अपि। राष्ट्रपतिः प्राकृतसंस्कारवशात्, दुराग्रहवशात्, भूगर्भीयतैललोभात्, स्वपितृशत्रुं प्रति विद्वेषाद्वा अन्याय्यमपि दार्ढ्येन विश्वसन् प्रतिकूलतर्कान् ज्ञात्वाऽपि तान् उपेक्ष्य महान्तमुद्योगं कृत्वा स्वकीयां प्रवृत्तिमिदानीं समर्थामपि मत्वा सदम्भः 'अहं जानामि, मया सम्यक् प्रमितम्' इत्यादिकमपि अनुभवति अभिलपति च। तथैव सर्वदा अस्माभिरपि अन्याय्या प्रतीतिरेव प्रमात्वेन ऊरीक्रियते। तादृशीमेव प्रतीतिमाश्रित्य प्रवर्तामहेऽपि वयम्। वस्तुतस्तु सर्वे प्रत्ययाः अन्याय्याः, प्रतीयमानत्वात्, विपर्ययवत् - इति सार्वत्रिक-संशयवादिनां मतम्। (परन्तु अयं प्रयोगः सुशिक्षितसंशयवादिभिः

स्वातन्त्र्येण नोपस्थाप्यते। प्रायो वितण्डामात्रमाश्रित्य परेषां खण्डने एव तेषाम् अभिनिवेशात्, स्वतन्त्रप्रयोगस्य अनुमानप्रमाणविशेषत्वात् प्रमाणमात्रे च संशयवादिनामनिर्भरात्।)

ग्रीस्देशे प्राचीनकाले क्रीस्तपूर्वे तृतीये शताब्दे मध्ये विभिन्नप्रकाराः संशयवादिनः आसन्। तत्र Pyrroh इति नामा कश्चित् अत्युत्कटसार्वत्रिकसंशयवादी अभवत्, यस्य मतस्य पुनरुद्धारः रोमकसाम्राज्यसमये Sextus Empiricus नाम्ना सर्वप्रमाणविप्रतिषेधकारिणा अतिसुष्ठुतया कृतः। शाक्यमुनेर्बुद्धस्य यौवनकाले भारतवर्षेऽपि तादृशाः अज्ञानवादिनो वैतण्डिकाः सर्वप्रमाणोपप्लववादिन आसन् इति दीघनिकायस्य ब्रह्मजालसूत्रा-दवगम्यते। एते आजीवका इति ख्याताः मख्खलिगोसाल् सञ्जय-बेलात्थिपुत्तादयो न केवलं सद्वादं, परन्तु असद्वादमपि, सदसद्वादमपि, अनेकान्तवादमनिर्वाच्यवादमपि खण्डयन्तः सर्वान् वादिनः कथासु निगृह्य विराजन्ते स्म। न तु एतेषां प्रत्यक्षैकप्रमाणवादिषु भोगैकलिप्तेषु चार्वाकेषु अन्तर्भावः कल्पनीयः। एतैस्तावत् प्रमाणमात्रप्रत्याख्या-नात्। प्रायः श्रमणा इमे सामाजिकगार्हस्थ्यादिकं परित्यज्य शीतोष्णादिद्वन्द्वसहिष्णवो भिक्षाटनेनैव जीवन्ति स्म। पाश्चात्ये प्राचीनयवनदेशीयाः सार्वत्रिकसंशयवादिनोऽपि जीवनधारणार्थं यत्किञ्चित् अभ्यस्तविश्वासानाश्रित्य राजदण्डभयात् सामाजिक-नियमान् परिपालयन्तः, तेषामप्रामाण्यं, नाम, अन्याय्यत्वं स्वीकृत्य बाह्यतः अविचारितरमणीयव्यवहारशीलाः न्यवसन्। परन्तु अन्तर्हृदये निश्चयात्मकप्रतीतिप्रत्याहारं नियतसन्देहान्दोलनदोलायमानत्वम्

(Suspension of judgment) अनध्यवसितप्रतिभासमात्रोपजीवित्वमाचरन्तः, नास्त्यस्माकमाग्रहो, नास्ति क्वापि विषये इदमित्थमेवेति निश्चयः, नास्ति च मतप्रतिष्ठाप्रयोजनम्। तस्मान्नास्ति पक्षप्रतिपक्षाभ्यां विवादभीतिरिति कृत्वा सर्वप्रत्ययसंयमनादेव उद्वेगशून्याशान्तिः प्राप्यत (from epoche comes ataraxia) इति मत्वा च सार्वत्रिकसंशयवादमवलम्ब्य एव मिथ्यादृष्टिजनितदुःखेभ्यस्त्राणरूपं मोक्षं प्रपेदिरे। अस्य संशयवादस्य अतिजरतीनां युक्तीनां मध्ये इनेसिडिमस् (Aenesidemus) - कथिताः दशयुक्तयः प्रसिद्धाः। पश्चात् अग्रिप्पा (Agrippa) नामकः रोमकः संशयवादी ता एव आश्रित्य त्रिशूलाकृतिमेकां त्रिधासङ्कटयुक्तिमपि निर्मितवान्। अनवस्था वा चक्रकं वा निर्युक्तिकस्वीकृतिमूलाश्रयो वा इत्येतान् अनिष्टप्रसङ्गान् अतीत्य कोऽपि तुरीयः पन्था नास्ति। तस्मात् प्रतीतीनां न्याय्यत्वसाधनदुराशा एव परित्यज्यतामिति तस्य आशयः। तासु काश्चिद्युक्तयः अत्र दृष्टान्ततया विव्रियन्ते।

१) तत्र प्रथमतस्तावत् मतविरोधात् प्रतिभासवैविध्याच्च विनिगमनाविरहात् संशयापादानम्। इदं सर्वसम्मतं भवति यत् एकमेव वस्तु विभिन्नेषु जन्तुषु विभिन्नरूपेण प्रतिभाति। पेचकाः दिवान्धाः नैशतमसि दृष्टिमन्तो, वयं नेत्रद्वयशालिनो, मधुमक्षिकादयश्च बहुनयनपुञ्जयुताः, अन्ये पुनः अन्धा अपि श्रोत्रेण शब्दप्रतिश्रुत्यादिभिः पश्यन्तीति प्राणिविद्भिः परिज्ञायते। योगिनामलौकिकप्रत्यक्षं ये स्वीकुर्वन्ति तेषां कृते अपरा अपि दर्शनरीतिः काचित् सम्भवति। तत्र इन्द्रियप्रकारभेदात् प्रतिभासभेदः स्वाभाविकः। एतेषां परस्परप्रतिस्पर्धिनां

दृश्यमानप्रतिभासानां मध्ये कः समीचीनः, के वा दुष्टाः, भ्रान्ताः, असम्पूर्णा इति परिच्छेत्तुं कोऽपि न्याय्यो विनिगमको नास्ति। तस्मात् कस्य समीपे वस्तु कथं प्रतीयते प्रतिभासते वा तद्वयं निर्णेतुं समर्थाः, परन्तु प्रकृतवस्तुस्वरूपं न केनाप्युपायेन निर्णेतुं समर्था इत्यतः स्वरूपविषये निश्चयेन अवधारणा न करणीया। प्रत्यय-प्रत्याहारेण एवं प्रतीयत इत्यत्रैव विरम्य स्थातव्यम् इति प्रथमा प्रक्रिया।

ननु तिरश्चां ज्ञानप्रकारविषये किमर्थोऽयमभिनिवेशातिशय इति चेत् "नासौ मुनिर्यस्य मतं न भिन्नं", "तावुभौ यदि सर्वज्ञौ मतभेदः कुतस्तयोः" इति प्रसिद्धवचनानि स्मारयित्वा संशयवादिनो वक्तुं शक्नुवन्ति मनुष्याणामपि एकस्मिन्नेव प्रमेयपदार्थे तुल्यबलवन्ति परस्परविरोधिमतानि भवन्ति। तेषां मध्ये विनिगमकविरहात् नियतसंशयावकाश इति।

२) ननु अनुमानादीनां परोक्षप्रमाणानां प्रयोगेण प्रत्यक्षप्रतिभास-विरोधस्थलेषु निर्णयः सुसाध्य इति चेत् तत्रापि -

"यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते।।"

इति पारम्परिकश्लोके यथा उच्यते तथैव सर्वेषां प्रयोगाणां परार्थानुमानानां च सत्प्रतिपक्षत्वमुद्भाव्य पुनरपि विरोधितुल्यबलप्रतीत्योर्विनिगमकविरह एव प्रतिपाद्यत इति द्वितीया विधा संशयवादिनाम्।

३) तृतीया न्याय्यत्वसमर्थकयुक्तिपरम्परायाः अनवस्थाग्रस्तता-प्रदर्शनात्मिका सार्वत्रिकसंशयवादस्य काचित् प्रसिद्धा प्रक्रिया।

अस्य उदाहरणं न तु यवनग्रन्थेभ्यः परन्तु खण्डनकारेण श्रीहर्षेण अतिसमादरेण उल्लिखितस्य लोकायतदार्शनिकस्य जयराशिभट्टस्य तत्त्वोपप्लवसिंहाभिधानात् ग्रन्थात् किञ्चिदुल्लिख्यते। प्रत्यक्ष-लक्षणघटकस्य अव्यभिचारिपदस्य तात्पर्यं बहुधा विकल्प्य तस्य असमीचीनत्वमानर्थक्यं च तस्मिन् ग्रन्थे वदता जयराशिभट्टेन नैयायिकं प्रति उच्यते-

"अथ प्रवृत्तिसामर्थ्येन अव्यभिचारितां वेत्सि, तत् किमवगतम्, अनवगतं वा? यदि नावगतं तत् 'अस्ति' इति कथं वेत्सि? अथ अवगतं, तदवगतेरव्यभिचारिता कथमवगम्यत इति पूर्वोक्तमनु-सर्तव्यम्"[1] इति। अत्र अनवस्थाबीजं सुस्पष्टम्।

४) चतुर्थे तावत् प्रमाणप्रमेययोर्लक्षणलक्ष्ययोश्च अन्योन्याश्रय-प्रतिपादनम्। लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति सुविदितम्। प्रमायाः वा, प्रमाकरणानां वा, प्रामाण्यघटकस्य न्याय्यत्वस्य वा लक्षणं यदि आदौ न परिज्ञायते तर्हि प्रमातः अप्रमायाः भेदं, न्याय्यायाः प्रतीतेश्च अन्याय्यात् प्रत्ययात् भेदमविजानन्तो ज्ञातारः प्रामाण्य-निश्चये असमर्थाः स्युः। परन्तु लक्षणनिर्णये सर्वत्रैव एका महती समस्या वर्तते। सर्वलक्ष्यवृत्तित्वे सति लक्ष्येतरावृत्तित्वं लक्षणस्य साधनीयो धर्मः। असौ तु प्राक् लक्ष्यनिश्चयं विना न सिद्ध्यति। सर्वे दृष्टवायसाः असितवर्णा इति मत्वा वायसलक्षणमध्ये यदि असितरूपवत्त्वं निवेश्यते तदा पशुशालायां श्वेतवायसं दृष्ट्वा लक्षणमिदं दुष्टमिति चिन्तनीयं, नायं वायस इति वा चिन्त-नीयमिति जिज्ञासा जायते। तत्र असितरूपवत्त्वे निवेशिते

लक्षणमव्याप्तिदोषदुष्टं स्यादिति चेन्मतम्। तदा लक्ष्यज्ञानाधीनं लक्षणज्ञानमिति सिद्ध्यति। परन्तु लक्ष्यज्ञानमपि लक्षणज्ञानाधीनमेव भवति। अन्यथा केनोपायेन श्वेतकाकस्य काकत्वं निश्चीयेत? इत्थं लक्ष्यज्ञानात् लक्षणपरीक्षणं, लक्षणज्ञानाच्च लक्ष्यज्ञानमिति अन्योन्याश्रयात् सर्वत्र लक्षणज्ञानमनुपपन्नम्।

पुनश्च प्रमाणाधीना प्रमेयसिद्धिरित्यपि सुप्रतिष्ठितो नियमः। परन्तु प्रमाणानां प्रमाणत्वेन सिद्धिः कथं भविता? अत्र लौकिकमुदाहरणमेकं गृह्णामि। पुस्तके कानि अक्षराणि मुद्रितानि एतद्विषये मम चक्षुरेव प्रमाणम्। परन्तु मम चक्षूंषि तावत् त्रुटिते वा निर्दोषे वा इति कथं निश्चीयते? तत्र अनाश्वासं दूरीकर्तुं करणापाटवपरीक्षावसरे 'क' इति दूरे लिखितमक्षरमहं 'क' इत्येव पठामि उत 'फ' इति पठामि इत्यादिकं विचार्यते नेत्रपरीक्षकैः। तत्र परीक्षककक्षमध्ये लिखितानामक्षराणां तत्तत्स्वरूपमभ्युपेत्य एव स विचारः क्रियते। परन्तु तेषां लिप्यक्षराणां कत्वादि स्वरूपमपि केनापि चक्षुषा एव निर्णीतः। तस्मात् सामान्यतो द्रष्टव्यपदार्थानां प्रसिद्धरूपादिकमवधार्य ततः करणानां प्रामाण्यज्ञानम्, अपि च करणानां प्रामाण्यं च अभ्युपेत्य एव द्रष्टव्यपदार्थानां रूपादिसिद्धिरिति अत्रापि अन्योन्याश्रयः। सामान्यत इयं समस्या Roderick Chisholm नामकेन विंशशतकीयप्रमाणतात्त्विकेन "The Problem of the Criterion"[2] नाम्ना ख्यापितः। 'Criterion' इति शब्दस्य 'निकषः' इत्यर्थः। यथा इदमकृत्रिमं सुवर्णं न वा इति परीक्षार्थं निकषपाषाणस्य उपयोगः क्रियते, 'तथैव कश्चित्

समर्थकप्रमाणं न्याय्यं न वा इति परीक्षितुमपि निकषस्य प्रयोजनमस्ति। परन्तु तस्य निकषीभूतस्य प्रमाणपरीक्षणोपायस्यापि सम्यक्त्वं सर्वप्रमाणसमर्थकत्वे सति प्रमाणेतरासमर्थकत्वेनैव प्रसिद्ध्यति। एवमन्योन्याश्रय एव निरूप्यनिकषयोरितरेतराश्रयणसमस्येति परिचिता। असौ स्वशब्दैः अतिस्पष्टतया इमां समस्यामेवं विवृणोति-

"We may distinguish two very general questions. These are, 'What do we know?' and 'How are we to decide, in any particular case, whether we know?', 'What is the extent of our knowledge?', 'What are the criteria of knowing?'. If we know the answer to either one of these questions, then perhaps we may devise a procedure that will enable us to answer the other. If we can specify the criteria of knowledge, we may have a way of deciding how far our knowledge extends. Or if we know how far it does extend and are able to say what the things are that we know, then we may be able to formulate criteria enabling us to mark off the things that we do know from those that we do not. But if we do not have the answer to the first question, then, it would seem, we have no way of answering the second. And if we do not have the answer to the second, then, it would seem, we have no way of answering the first."

यद्यपि Prof.Chisholm-महोदयेन १९७७ वर्षे इदं लिखितं तथापि मन्ये द्विसहस्रवर्षेभ्यः प्राक् न्यायसूत्रकारेण इयमेव समस्या द्वितीयाध्यायस्य प्रथमाह्निके षोडशे सूत्रे स्वल्पाक्षरैरित्थं प्रकटीकृता-

"प्रमेया च तुलाप्रामाण्यवत्" इति। तत्र वात्स्यायनभाष्यं पश्यन्तु -

"गुरुत्वपरिमाणज्ञानसाधनं तुलाप्रमाणं, ज्ञानविषयो गुरुद्रव्यं सुवर्णादिप्रमेयं, यदा च सुवर्णादिना तुलान्तरं व्यवस्थाप्यते तदा तुलान्तरप्रतिपत्तौ सुवर्णादि प्रमाणं तुलान्तरं प्रमेयमिति" इति। एवमेकस्यामेव बुद्धौ उपलब्धिसाधनत्वात् करणत्वम्, उपलब्धिविषयत्वाच्च कर्मत्वमिति कारकसाङ्कर्यमतिविस्तारेण विमृश्य, तेन अस्मात् अन्योन्याश्रयो न आपादितः परन्तु सूत्रकाराभिप्रायमनुसरता 'प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिप्रसङ्गः' इत्यनन्तर-सूत्रव्याख्यायामनवस्था प्रतिपादिता। अयमेव कियान् विशेषः। तत्र अस्याः निरसनप्रकाराः अपि Chisholm-महोदयेन यथा विमृष्टास्तथैव वात्स्यायनेन वार्त्तिककारादिभिरपि चिन्तिताः। तदग्रे विवक्षामि।

५) तदनन्तरं सर्वदृष्टीनां प्रेक्षकसापेक्षत्वात् वस्तुस्वरूपावधारणायोग्यत्वमिति पञ्चमी युक्तिरुपस्थाप्यते। यथा शीतार्तानां कृते प्रखररविकरनिकराः सुखदायका भवन्ति परन्तु ग्रीष्मतापपीडितानां कृते त एव पीडाकरा भवन्ति, एवमेक एव कम्बलस्पर्शोऽपि केषाञ्चित् अतिकोमलत्वचां कृते कर्कशः अन्येषां कृते मृदुतरः प्रतीयते।

लशुनगन्धः केषाञ्चित् कृते घृणार्ह इतरेषां कृते लालसाजनकसौगन्ध्य इव भाति। मातुलकन्याविवाहः कस्मिंश्चिद्देशे प्राशस्त्येन अन्यत्र च निन्दिततया अनुभूयते। एवं सर्वत्रैव इन्द्रियावस्थाभेदात्, वासनाभ्यास-संस्कारभेदात्, रुचिभेदात्, देशकालजातिभेदाच्च प्रेक्षकसापेक्षा प्रतीतयो भवन्ति। तत्र प्रेक्षकनिरपेक्षतया वस्तुस्वरूपं कीदृगिति ज्ञातुमस्माकं कोऽप्युपायो नास्त्येव इति संशयवादिनामेकदेशिनां सर्वसापेक्षतावादिनां मतम्। इदमेव मतमाधुनिकप्रतीच्यदर्शने नैकासु शाखासु Relativism (सापेक्षतावादः) इति नाम्ना परिचितः।

केचिदाधुनिकाः अन्धानां हस्तिदर्शनदृष्टान्तं मनसि निधाय जैनानां स्याद्वादमपि एवं सापेक्षतावादे एव अन्तर्भावयन्ति। परन्तु तच्चिन्त्यम्। जैनाः केवलज्ञानरूपं सर्वज्ञत्वमङ्गीकुर्वाणाः वस्तु-स्वरूपस्य सर्वथा प्रमाणाविषयत्वं न प्रतिपादयन्ति। अस्मादृशैरसर्वज्ञैः अशेषतया ज्ञातुमशक्योऽपि अस्ति प्रकृतवस्तुस्वरूपं तच्च केवलिना सर्वज्ञेन ज्ञायते इति आर्हतानामभिमतम्। तस्मात् न ते संशयवादिनः, न पुनः सर्वसापेक्षतावादिनोऽपि इत्येव मम प्रतिभाति।

प्राचीनसार्वत्रिकसंशयवादस्य एतत् प्रकारपञ्चकमुल्लिख्य अधुना षोडशे शताब्दे रेणे देकार्ते-महोदयेन (Rene Descartes) आधुनिकपाश्चात्यदर्शनस्य जनकीभूतेन आश्रितां सार्वत्रिक-संशयोद्भावनप्रक्रियां सङ्क्षेपेण व्याख्यातुं यतिष्ये। तस्य 'ध्यानावली' (Meditations) इति शीर्षकान्विते ग्रन्थे प्रथमध्याने तेन उच्यते - 'एतावत्कालं मया यद्यदेव एकान्तसत्यनिश्चयतया स्वीकृतं तत्

सर्वमेव साक्षाद् इन्द्रियेभ्य उताहो इन्द्रियवृत्त्युपजीवकप्रमाणान्तरेभ्य एव मया प्राप्तमवगतञ्च। कति वारमेतानि इन्द्रियाणि मां प्रतारयन्ति इति मया दृष्टम्। अपि च येन वयं वारमेकमपि प्रवञ्चिताः तस्मिन् आस्थास्थापनं न हि परिणामदर्शिभिः विचक्षणैः करणीयम्।

ननु यद्यपि अतिदूरादतिसामीप्यात् सौक्ष्म्यात् केषाञ्चिद्विषयाणां ग्रहणे इन्द्रियाणां प्रवञ्चकत्वं स्यात्, तथापि 'अहमधुना अस्मिन् प्रदेशे शीतनिवारकवह्निं निकषा उपविश्य स्वहस्तेन इदं पत्रपृष्ठं स्पृशन् अस्मि' इति विषये कथमिन्द्रियाणामन्यथाप्रतिभासनावकाशः - कथं वा इदं करचरणादिकं ममैव इति प्रत्यक्षभूतं विषयमहमपह्नोतुं शक्नोमि?' इति चेत् स्वप्नकालेऽपि एतादृशनिश्चयानुभूतिरस्माकं जायते। तेन तस्य याथार्थ्यं न साध्यते। स्वप्नानुभवाः जाग्रदनुभववत् स्पष्टाः, विशदाः अबाधिताः परस्परप्रबन्धबद्धाः न भवन्ति इति स्वप्नजागरयोर्भेदो यदि क्रियते तथाऽपि अयमिदानीन्तनो मे अनुभवो जाग्रदवस्थाकालीन इति निश्चयो दुरुपपादः। तत्र देकार्ते-महोदयोऽपि अन्ततो गत्वा संशयवादं निरस्यति। परन्तु अत्र प्रथमध्यानमध्ये पूर्वपक्षतया संशयवादमापाततः स्थापयन्ति। तथैव न्यायलीलावतीकारेणापि ततः त्रिशतवर्षेभ्यः प्रागेव स्वप्नजागरयोरविशेषं पूर्वपक्षतया एवं प्रत्यपादि। (एष युक्तिकलाप एव परस्तात् पाश्चात्यैरपि दत्तमिति कृत्वा लीलावतीकारस्य युक्तय एव अत्र उल्लिख्यन्ते) -

"न विशिष्यते स्वप्नज्ञानं विद्यातः। इदं बाधितमिति चेत् न स्वरूप-,विषय-,फलापहारात्मकबाधविरहे विपरीतार्थोपदर्शनमात्रस्य

उभयत्रापि तुल्यत्वात् (स्वप्नो जागरेण बाध्यते चेत् जागरोऽपि स्वप्नेन बाध्येत इति अनिष्टप्रसङ्गः)" इति।

"जाग्रदवस्थायां सजातीयप्रबन्धसंवादात् स्वप्नस्य काकतालीयसंवादादिति चेत्, न। काकतालीयसंवादवतोऽपि चिरदृष्टपुनर्दर्शनादेरव्यभिचारात्, प्रबन्धसंवादवतोऽपि दीपैकत्वनिर्भासादेर्व्यभिचारात्। अर्थक्रियासंवादविसंवादैर्जागरणस्वप्नलक्षणमिति चेत् न। स्वप्नपरिदृष्टजलादेरपि पानावगाहनाद्यर्थक्रियादर्शनात्। मिथ्याप्रत्ययप्रवाहः स्वप्नः तद्विपरीतप्रत्ययस्तु जागरणमिति चेत्, न। मिथ्याप्रत्ययप्रवाहस्यापि पीतशङ्खगोचरस्य जागरणत्वात्। प्रचुरतरमिथ्याप्रत्ययप्रवाहः स्वप्नः, भूरियथार्थप्रत्ययप्रवाहो जागरणमिति चेत् न। उन्मादाद्यर्जितप्रचुरतरविपर्ययप्रत्ययप्रवाहस्यापि जागरत्वात्" इति। अत्र इदमद्भुतं भवति यत् देकार्ते-महोदयेनापि यद्यहमुन्मादरोगग्रस्तः स्याम् तदा असम्भावितमपि अयथार्थविषयं यथार्थत्वेन मन्यमानः तमेव अर्थं दृढनिश्चयेन विश्वासं कुर्यामिति अत्रैव सन्दर्भे उच्यते।

अनन्तरकाले लीलावतीकारेणापि स्वसिद्धान्तमभिदधता देकार्ते-महोदयेनापि अन्तिमे षष्ठे ध्याने स्वप्नजागरणयोर्भेदव्यवस्था सम्यक् प्रतिपादिता। परन्तु सार्वत्रिकसंशयवादिभिरत्रापि काचिद्दुरुत्तरा आपत्तिरुन्नीयते। अस्तु नाम स्वप्नजागरयोर्भेदसाधकः कश्चिन्निकषो (criterion) नाम निर्णायको विशेषधर्मः। परन्तु अस्मिन् क्षणे मयि यज्ज्ञानकलापः अनुभूयते तज्ज्ञानकलापे असौ विशेषधर्मो वर्तत इति ज्ञानमपि स्वाप्नं स्यादिति सम्भावना दुरपनेया। कदाचित्

स्वप्नकालीनः 'स्वप्नोऽयम्' इति सन्देहः स्वप्नमध्ये एव प्रतीयमानजाग्रल्लक्षणानि विविच्य निराक्रियते अस्माभिरथवा एकस्वप्नबाधात् स्वप्नान्तरं प्रविशता मया चिन्त्यते - 'पूर्वदृष्टं स्वप्नमात्रमासीत्, अधुना तु तद्बाधनात् जागरितोऽहं' यावत् प्रकृतजागरणवेलायामसौ जागरणवदनुभूयमानस्यापि स्वप्नान्तरस्य बाधः साध्यते। तस्मात् सत्यपि स्वप्नजागरणवैलक्षण्ये अस्मिन् वर्तमानज्ञाने जागरणलक्षणमस्तीति ज्ञानस्यापि स्वाप्नत्वसम्भवात् नास्ति भाविबाधकशङ्कातः कस्यापि बाह्यप्रत्यक्षस्य परित्राणम् - इति संशयवादिनामेकः पक्ष इति प्रथमध्याने उच्यते।

ननु यद्यपि 'मम शरीरमिदम्', 'अस्मिन् गृहे अहं निवसामि' इत्यादि प्रत्यक्षप्रतीतिरित्थं सार्वत्रिकसंशयग्रस्ता स्यात् तथापि पञ्चसङ्ख्यया सह चतुःसङ्ख्यायोजनात् फलं नवसङ्ख्या भवति इत्यत्र, समान्तरालं रेखाद्वयं कदापि परस्परं न स्पृशति इत्यादिगणितसिद्धान्तः स्वप्नदृष्टोऽपि अन्यथा न भवतीति कृत्वा संशयान्मुक्तास्ते इति चेत्, तत्र देकार्ते-महोदयेन एका कृत्रिमा कल्पना कृता - यत् कल्पनाबलेन तत्रापि अन्याय्यत्वशङ्का मिथ्यात्वशङ्का वा कर्तुं शक्येत। यदि एवंविधमहामायावी चतुरचूडामणिः कश्चिद्दानवः स्यात् येन मम मानसमधिकृत्य ईदृशी माया विस्तृता यया मायया सर्वमयथार्थमपि यथार्थं मन्यमानोऽहं स्वतःसिद्धगणितसिद्धान्ततया यत्प्रत्ययान् युक्त्या प्रतिपाद्य प्रमाणीकृतवान् ते सर्वे एव वस्तुतो भ्रान्ताः, परन्तु तत्कुहकवशात्

भ्रान्तत्वेन आविष्कर्तुमशक्याः - इत्याकारिकायां कल्पनायां कृतायां संशयलेशवर्जितं गणितज्ञानमपि अप्रामाण्यशङ्काकवलितं स्यात्।

अत्यन्ताधुनिके काले गणकयन्त्राणामपूर्वचिन्तितमायिक-सृष्टिकौशले दृष्टे प्रतीच्यप्रमाणतत्त्वविश्लेषकेन Hilary Putnam इति नामकेन केनचित् हार्वाड्-विश्वविद्यालयाध्यापकेन देकार्ते-महोदयस्य कल्पनामेव अनुसृत्य अपरापि काचित् तर्कनीया सम्भावना उपन्यस्ता। तस्य "Brain-in-a-Vat-Scenario"[3] इति नाम्ना परिचयः साम्प्रतिकपाश्चात्यप्रमाणशास्त्रे भूरिश उल्लिख्यते।

स्यादेवं कल्प्यतामस्ति कश्चित् ग्रहान्तरादागतो महामतिमान् स्नायुविज्ञाने सङ्गणकयन्त्रविज्ञाने च कृतभूरिपरिश्रमः परपीडको वैज्ञानिकः। तेन केनाप्युपायेन सुषुप्तिकाले मम शिरसो मस्तिष्कभागः चोरितः। मम मस्तिष्कं तावत् कस्मिंश्चित् शोधशालायां रसायन-परीक्षणार्थम् एकस्यां स्थाल्यां ('Vat'-मध्ये) जीवनसंरक्षकद्रवमध्ये संस्थाप्य अनेकाभिस्तन्त्रीभिस्तडित्प्रवाहयोगेन केनचिद् महा-सङ्गणकयन्त्रेण सह असौ योजितवान्। अधुना मम शरीरं तु नष्टम्। नाहं तिरुपत्यां वा धरणीतले कुत्रापि वा निवसामि। न मया किञ्चिदपि उच्यते, दृश्यते, भुज्यते, स्पृश्यते वा। परन्तु तद्गणकयन्त्रोन्नीतेन्द्रजालमहिम्ना मम मस्तिष्कस्नायुकोषेषु एवं तडिद्वार्ताः प्रेष्यन्ते यतः अहं तिरुपत्यां वसामि, अहं भुञ्जे, अहं व्याख्यानं ददे, अहं पश्यामि, अहं काष्ठासने उपविशामि इत्यादिकं सर्वं तथैव अनुभूयते यथा सुस्पष्टतया अधुना प्रतिभाति। यदि

ईदृशी वस्तुस्थितिः स्यात् तदा बाह्यतः अस्यां पृथिव्यामस्मिन् नगरे अनेन शरीरेण वस्तुतो नाहं विचरामीति वस्तुस्थितिः केनापि उपायेन मया मम मस्तिष्केन ज्ञातुं न शक्येत। तस्मात् अधुनैव तादृशी अवस्था वस्तुतो न विराजत इति क आश्वासः, अहं भवन्तः पश्यामि, व्याख्यानं ददामि, अस्मिन् प्रकोष्ठे तिष्ठामि, जलपात्रं पुस्तकं च पश्यामीति प्रतीतीनां का वा न्याय्यता इति सार्वत्रिक-संशयवादस्य कश्चित् अतिसाम्प्रतिक उत्कटः उदर्कः।

## द्वितीयविभागः
## संशयवादनिरासः

इत्थं संशयवादिनि जागरूके न स्यात् प्रामाण्याप्रामाण्य-विवेकव्यवस्था, प्रत्यक्षादिप्रमाणानां, प्रमासामान्यस्य न्याय्यत्वं च सर्वथा विलुप्येत - इति भिया पाश्चात्यदार्शनिकाः विगते शतवर्षे सार्वत्रिकसंशयवादस्य निराकरणार्थं बहून् उपायान् चिन्तितवन्तः। तेषु सङ्क्षेपत उपायचतुष्टयमत्र विविच्यते।

क) तत्र तावत् सार्वत्रिकसंशयवादः स्वव्याहतः। अतो हि प्रमाण-तत्त्वविचारवेलायां नितरामुपेक्षणीय इति प्रथमो निरसनप्रकारः। यथा न्यायसूत्रकारेणैव सूचितमासीत् तथैव आधुनिकपाश्चात्य-दार्शनिकाः अपि "सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधानुपपत्तिः" इति सार्वत्रिकसंशयवादिने चिरन्तनं प्रत्युत्तरं यच्छन्ति। येन तु अनुमानादिकं सर्वमेव निराक्रियते तेन तर्केण अनिष्टापादनमपि कथं क्रियते, नास्ति कापि न्याय्या प्रमा इति निश्चयस्यापि अप्रामाण्यं सांशयिकत्वं

वा कथं तेन नाङ्गीक्रियते, अङ्गीक्रियते चेत् गतं सार्वत्रिकत्वं संशयस्य। मतभेदात्, इतरप्राणिनामितरमनुष्याणां वा प्रतीतिभेदाच्चेत् प्रेक्षकसापेक्षत्वमुत्प्रेक्षितं संशयवादिभिः। तेषामितरेषां कीदृशी विपरीता प्रतीतिर्जायत एकस्मिन्नेव वस्तुनि इति शब्दानुमानप्रमाणादिक-मनाश्रित्य कथं ज्ञायते तेन इति कृत्वा बहुस्वव्याघातदोषाः संशयवादे उद्भाव्यन्ते।

परन्तु एतेन संशयवादे निरस्तेऽपि सति अस्माकं प्रतीति-प्रामाण्यसाधने प्रतिकूलतर्कसहिष्णवो हेतवः तेनैव व्याघातप्रदर्शनेनैव न प्रदर्शिताः भवन्ति।

अन्ततो गत्वा सार्वत्रिकसंशयवादः स्वक्रियाविरोधी भवतीति अनेकेषां मतम्। यथा "न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः" तथैव न हि देहभृता सर्वविश्वासाः त्यक्तुं शक्यन्ते। क्षुधातृष्णा-विवक्षादिविवशतया अन्नपानादिविषये दृढा प्रतीतिस्तैरपि स्थाप्यते। परन्तु कथं सा एव न्याय्या प्रतीतिर्यस्यां वयं संशयितुमसमर्थाः? तत्र अरुचिबीजमिदं भवति - कश्चिन्मरुप्रदेशे पिपासार्तः सन् तर्ककुशलोऽपि मरणोन्मुखो जनो मृगतृष्णां दृष्ट्वा संशयितुं न शक्नोति। तृष्णा एव तत्र तस्य मरीचिकायां जलप्रतीतिं जनयति। कदाचित् काकतालीयसंवादवशात् तेन तत्रैव मरुमध्ये जलं प्राप्यते वा। परन्तु तेन तद्दृष्टस्य मृगतृष्णातोयप्रत्ययस्य न्याय्यत्वं न साध्यते। तस्मात् व्याघातभयात् वा जीवननिर्वाहार्थं वा आशङ्कायाः अवधिः विश्रान्तिर्वा अस्माभिः अनन्योपायत्वेन स्थाप्यत एव। तस्मात् सार्वत्रिकसंशयवादस्य जीवने प्रतिपालनासम्भवत्वमेव प्रमीयते न

तु तस्य अयौक्तिकत्वम्। प्रसङ्गविपर्यययुक्तिमाश्रयता संशयवादिना स्वयं प्रमाणानि अनङ्गीकृत्यापि अभ्युपगमवादेन अस्माकं प्रामाण्ये विश्वासवतां दोषप्रदर्शनार्थं यत्किञ्चित्प्रमाणयुक्त्यादिप्रयोगेऽपि स्ववचनव्याघातो न स्यादित्यपि संशयवादिभिः पर्यनुयोजयितुं शक्यते।

ख) न्याय्यतासम्पादकयुक्तीनामनवस्थाभङ्गार्थं यथा मूलप्रत्यय-प्रतिष्ठतावादी सुखदुःखज्ञानमनुव्यवसायादिकं संशयातीत-स्वतःसिद्धत्वेन अङ्गीकरोति तथैव देकार्ते स्वयं 'नास्ति स्वप्नमायाभ्रमादिशङ्कातः कस्यापि ज्ञानस्य परित्राणम्' इति ब्रुवते संशयवादिने केचन मूलप्रत्ययान् प्रदर्श्य सार्वत्रिकसंशयप्लावने बाधां जनयति। तेषां मध्ये प्रथमः प्रत्ययः 'अहं संशयात्मकज्ञानवान् तस्मादहमस्मि' इति प्रत्ययः। यः सर्वस्मिन् संशेरते स एव नाहं संशये इति वक्तुं न शक्नोति। तस्मात् स्वकीयसंशयविषये तु संशयः सुतरां व्याहतो भवेत्। यदि संशयात्मकचिन्तावानहं, तदा अहमस्मीति प्रत्ययोऽपि एकान्तेन संशयायोग्यः स्यात्। तस्मात् -

| | | |
|---|---|---|
| Cogito | - | अहं विमृशामि, अहं सन्देह्मि |
| Ergo | - | अत एव |
| Sum | - | अहमस्मि |

इति शङ्काशूलेन सर्वथा अभेद्यः प्रथमो निश्चयः First Certainity देकार्ते-महोदयान् सर्वसंशयान्धकारान्मोचयामास। तदनन्तर-मतिसूक्ष्मयुक्तिजालमाश्रित्य यदि स्वात्मा अस्ति, तदा स्वात्मज्ञानमपि अस्ति अल्पज्ञानवतः अपर्णस्य जीवात्मनो स्वरूपज्ञानं कथमपि

अपूर्णता-विशेषणविषयतया न जायेत यदि पूर्णस्य परमात्मनः सत्ता, ज्ञानमपि आजन्मत एव मयि न स्यात्। अभावज्ञानस्य प्रतियोगिज्ञानसापेक्षत्वात् अस्ति संशयाकुलस्यापि चित्ते तादृश-पूर्णपरमेश्वरस्य काचित् धारणा। अन्यथा पूर्णतायाः किञ्चिदपि ज्ञानं मयि पूर्णेन निमित्तकारणेन विना कथमपि न जन्येत, तस्मादस्ति परमेश्वरः; अपराणि च प्रमाणानि तत्र परिपोषकानि दत्तानि तद् यथा पूर्णत्वं सत्ताव्याप्यमसतः अपूर्णत्वात् तस्मादीश्वरलक्षणादेव ईश्वरसत्तासिद्धिरन्यथा निरतिशयपूर्णः अपि असन्निति वदतोव्याघात-भयात्; असौ परमेश्वरः सर्वकल्याणगुणवत्त्वात् न हि प्रवञ्चको भवितुमर्हति; तेन जनिताः अस्मद्बुद्धयः अस्मज्ज्ञानकारणानि च यदि नियमेन बाहुल्येन वा भ्रान्ताः भ्रान्तिजनकानि स्युस्तदा परमेश्वरस्य प्रतारकत्वप्रसङ्गः, तस्मात् परमेश्वरप्रदत्तेन इन्द्रियवर्गेण अस्माभिः स्पष्टतया विविक्ततया च विचारपूर्वकं यद्दृश्यते प्रतीयते च तादृगेव विश्वं सत्यमेव बहिस्तिष्ठति - इति रीत्या संशयवाद-मुद्गरेण एकवारं विश्वासप्रासादं विचूर्णीकृत्य तदनन्तरं (मूलप्रत्ययेभ्यः क्रमशः स्तरात् स्तरान्तरं निर्माय) देकार्ते-महोदयेन नूतनो दृढतरः प्रमाप्रासादः Edifice of Knowledge - पुनर्निर्मितः।

ग) लक्ष्यलक्षणयोः प्रमेयप्रमाणयोर्वा इतरेतराश्रयदोषमाश्रित्य संशयवादस्य या तुरीया पद्धतिः प्रदर्शिता तस्याः निराकरणं परिनिष्पन्नविशेषवादेन (Particularism) क्रियते। तद्यथा - केचित् परिनिष्ठिताः लक्ष्याः प्रमेयाश्च आदौ लोकव्यवहारेण सिद्धाः। तेषामनुगतधर्मानुसन्धानं लक्षणकृद्भिः प्रमाणस्वरूपमीमांसकैश्च

क्रियते। परन्तु लोकव्यवहारसिद्धमिति चेत् सिद्धमेव तर्हि - यथा पाणिनिना साधुशब्दनिरूपणनियमैः शब्दानां साधुत्वं न प्रथमतो लक्षणेन साधितं, परन्तु लोकव्यवहारसिद्धान् प्रयोगान् साधुत्वेन अभ्युपेत्य एव तेषामनुगमो लघुभिर्नियमैः कथं क्रियत इति तत्र लक्षणप्रमाणनिर्णये प्रयत्नः कृतः तथैव निरूप्यनिकषयोः अन्योन्या-श्रयसमस्यायां कस्यचित् निरूप्यस्य लोकप्रसिद्धस्य आदौ निकषं विनैव सिद्धिरित्येव समाधानम्।

घ) अपि च नैसर्गिकतावादः Naturalism अपि संशयवादरोगस्य अगदम् एकम्। संशयवादी प्रत्ययानां न्याय्यत्वस्थापनार्थं यादृशान् अवास्तवकल्पनीयतर्कान् उत्प्रेक्ष्य तेषामपनयनेन विना प्रमाणां प्रामाण्यं न सिद्ध्यति इति वदति तादृशतर्काः सर्वथा अप्रसक्ताः अस्वरसा अपि, मनःसहितानि इन्द्रियाणि आश्रित्य एव सर्वे शरीरिणो निश्चयं संशयं तर्कांश्च कुर्वन्ति। तेषां क्वचिद्दोषवशात् मिथ्याज्ञानजनकत्वेऽपि नैसर्गिकोऽस्माकं तेषु निर्भरः। स्वकीयबुद्धौ, इन्द्रियादिषु, जगतश्च प्रमेयत्वे अविश्वासे सति न केवलं सर्वप्रमाणोपप्लवः, परन्तु सर्वव्यवहारलोपः स्यात्। तस्मात् न तु तादृशवादस्य कल्पनाऽपि युज्यते। तस्मात् तथ्यमिदं विश्वम्। प्रमाणेन तत्र पदार्थस्वरूपान् द्रव्यगुणकर्मादीन् निर्णीय संशयहेतुषु अनुपस्थितेषु निश्चयात्मकप्रतीत्या व्यवहारे प्रवर्तना एव नैसर्गिकी। तत्र सार्वत्रिकसंशयवादस्तु अनैसर्गिकत्वात् निरवकाश इति केषाञ्चिन्मतम्।

यद्यपि नायं लोकोऽस्ति न परः संशयात्मन इति बहुधा संशयवादस्य निन्दा श्रूयते, अपि च व्यवहारे संशयवादः सर्वथा अनाश्रयणीय इति आधुनिकपाश्चात्यसंशयवादिनोऽपि स्वीकुर्वन्ति, तथापि प्रमाणशास्त्रस्य प्रमाणविचारस्य च मूलं दृढीकर्तुं संशयवादस्य महान् उपयोगोऽस्ति इति मे मतिः। यथा ज्ञानोदयात् प्राक् निर्वेदात्मक-वैराग्यस्य प्रयोजनं शास्त्रेषु उक्तं, तथैव प्रामाण्यपरीक्षणात् प्राक् सार्वत्रिकसंशयवादिपूर्वपक्षिणां युक्तिभिः सह मुष्टियुद्ध आवश्यकः।

न केवलं पाश्चात्यप्रमाणशास्त्रं परन्तु भारतीयप्रमाण-तत्त्वान्वीक्षणकुञ्जरोऽपि संशयवादरूपेण अङ्कुशेन विना दूरं तूर्णं वा नाग्रेसरति इति स्मारयित्वा विरमामि। प्रत्यक्षानुमानशब्दादि-भिर्गृहीतेषु अर्थेषु वयं निसर्गतो निश्शङ्काः। उत्सर्गतः तज्ज्ञानानां समर्थप्रवृत्तिजनकत्वात्। देहभृता संशयदोलारोहणेन नियतावस्थानं न शक्यमिति हेतोर्वा। परन्तु दार्शनिकजिज्ञासा बुभुत्सा खलु एतावती एव - कथमस्माकं नैसर्गिकोऽयं निश्चयानुभवः सर्वतर्कान-पहत**न्याय्यत्वम्** अर्जयति न वा?

किमिदमस्माकं चित्तवृत्तीनां स्वभावमात्रं यत् अयुक्ते भ्रम-स्वप्नमायादिसम्भावनायुक्तेऽपि विषये वयं प्रायः संशयितुमक्षमाः? कथं तथाऽपि अस्माकं प्रमाज्ञानपरिधिः संशयवादिभिर्यथा अति-स्वल्पीक्रियते तथा नास्ति, परन्तु विस्तृततरा एव वर्तते? उताहो अविचारितरमणीयान् व्यवहारानाश्रित्य अस्माभिरेवमेव सूक्ष्मपरीक्षणा-सहिष्णुजीवनमेव धारणीयमिति ललाटलेखनं समेषां मननेन

जीवतामपि मनुष्याणाम्?

'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इति न्यायेन उत्प्रेक्षणीयसंशयेन पराहतानन्याख्यान् एव विश्वासान् प्रमात्वेन गृह्णन्तो ननु कथञ्चिदपि जीवन्ति अस्मादृशाः ज्ञानाभिमानिनो जन्तव इति ध्येयम्।



## षष्ठं व्याख्यानम्

# पूर्वतःसिद्धप्रमितिपर्यालोचनम्

विभाति पूर्वतो हि यो हृदम्बरे स्वयम्प्रभः।
अतीन्द्रियाय विष्णवे चिते सते च ते नमः।।

प्रणवसरसि हंसीमागमाम्भोधिलक्ष्मीं
श्रुतिविपिनमयूरीं कल्पनाकल्पवल्लीम्।
विबुधसदसि वादे तर्कतामिस्रहन्त्रीं
शरणमुपगतोऽहं शारदां शब्दधात्रीम्।।

यः कालेनानवच्छेदात् पूर्वेषां परमो गुरुः।
तत्पदं दर्शितं येन सीतारामं नमामि तम्।।

यद्यपि गृहमार्गयानवृक्षकुड्यादिषु दृश्यमानेषु बाह्यद्रव्येषु, स्वपरस्मरणविषयेषु च भूतकालीनसङ्घटनादिषु, शब्दप्रमाणवेद्यासु मुखविकासभ्रूकुट्यादिभिर्वा अनुमितासु परचित्तावस्थासु च अस्माकं नैसर्गिकान् विश्वासान् संस्थाप्य एव वयं लोकयात्रां निर्वाहयामः, तथाऽपि संशयवादोद्भावितेभ्यः प्रतिकूलतर्केभ्यः तान् निश्चयात्मक-प्रत्ययान् संरक्ष्य तेषां न्याय्यत्वसम्पादनाय, ते न केवलं विश्वासाः परन्तु प्रमितय एव (not just beliefs but knowledge) इति प्रतिपादयितुं केचिन्मूलभूताः स्वतःप्रमाणाः भ्रमशङ्कारहितेन साक्षात्कारेण ग्राह्याः प्रत्ययाः आश्रयणीयाः भवन्ति। सार्वत्रिक-

संशयवादस्य निराकरणे तादृशसाक्षिवेद्यसुखदुःखादिज्ञानमेव अस्माकं शरणं, शङ्काविश्रान्तिभूमिरिति चोच्यते। 'इदमधुना रक्तत्वेन मे प्रतिभाति', 'अह सुखी', 'कोमलस्पर्शमनुभवामि' इत्याद्याकारकानि ज्ञानानि तादृशानि मूलीभूतानि। तेषां ज्ञानानां मूलीभूतत्वं नाम प्रामाण्यसाधकपरीक्षादीनामपि पुनः परीक्षणमिति रीत्या या परीक्षानवस्था, सा तेषु एव स्तब्धा भवति। यथोक्तं मध्वाचार्येण अनुव्याख्याने - "न परीक्षानवस्था स्यात् साक्षिसिद्धे त्वसंशयात्" इति। परन्तु अस्माकं लोकव्यवहारनिर्वाहकः प्रमाप्रबन्धो न हि तत्रैव विरमति। यदि रक्तं स्यात् तदा रूपवत्, रूपवच्चेत् गुणवत्, गुणवच्चेत् द्रव्यमित्यादिज्ञानान्तराण्यपि अनुमानेन अस्माभिर्निष्कृष्यन्ते, ताभ्य एव साक्षात्कारात्मिकाभ्यो मूलप्रतीतिभ्यः। परन्तु 'ताभ्यः अनुमीयन्ते' इत्युक्ते तासामनुमितीनां पृष्ठभूमौ ये नियमाः अभ्युपेतास्तिष्ठन्ति तेषां नियमानां युक्तीनां वा कुत उत्पत्तिर्ज्ञप्तिर्वा? कीदृशी अस्माकं तादृशनियमविषयिणी प्रमितिरिति महती जिज्ञासा अत्र लब्धप्रसरा भवति। तत्र प्रथमस्तरे 'यत् यत् गुणवत् तद्द्रव्यमेव', 'यदि पूर्णतया नीलरूपवत् तर्हि पूर्णतया पीतरूपवन्न भवितुं शक्नोति', 'यदि गुरुद्रव्यमधृतं स्यात् तदा भूमौ पतेत्', 'यदि चतुष्कोणाकारमिदं लेखनफलकं तर्हि नेदं वर्तुलाकारम्' इत्यादयो नियमाः भवन्ति येषां याथार्थ्यं सर्वत्र अवश्यम्भावितया एव अस्माभिरभ्युपगम्यते। न हि एकशो भूयशो वा दर्शनेन इन्द्रियजन्यज्ञानेन वा एते नियमाः केनापि निश्चीयन्ते। 'चतुष्कोण'-पदस्य अर्थो 'वर्तुल' इति पदेन उक्ता च आकृतिर्येन ज्ञायते तेन असकृत् प्रत्यक्षं विनैव या

चतुष्कोणाकृतिः सा न तत्काले एव वर्तुलाकृतिरिति पूर्वत एव निश्चयेन ज्ञायते। तथाऽपि कयाचित् सामान्यलक्षणया **अनुभूत्या** एतेषां प्रज्ञप्तिर्जायत इति चिन्तयितुं शक्यते। परन्तु इतोऽपि ऊर्ध्वतो द्वितीये स्तरे केचिदाशयाः (अत्र 'आशय'शब्देन आङ्ग्लभाषायाः पारिभाषिकशब्दः proposition अनूद्यते) सन्ति, येषां प्रमितिः सर्वथा प्रत्यक्षाद्यनुभवनिरपेक्षा शुद्धबुद्धिमात्रग्राह्या एव भवति। तद्यथा-

क. कस्यचिद्धर्मस्य तदभावस्य च एकस्मिन् धर्मिणि एकस्मिन्नेव अवच्छेदे युगपदवस्थितिरसम्भाविनी

ख. परस्परविरोधे तु न प्रकारान्तरस्थितिः

ग. व्यापकाभावे सति व्याप्याभावः अनिवार्यः

घ. यो यतो ज्यायान् स तदपेक्षया कनीयसोऽपि ज्यायान्।

एतेषां नियमानां या प्रमितिरस्माकं सर्वेषामस्ति (सर्वेषामित्युक्ते येषां तु एते आशयाः हृदयङ्गमा भवन्ति, न तु इतरेषाम्। यैः अवबुध्यते एभिर्वाक्यैः के आशयाः अभिलाप्यन्त इति तेषां सर्वेषामिति अभिप्रायः)। तज्जातीया प्रमा एव 'पूर्वतःसिद्धप्रमितिः' इति प्रतीच्य-दर्शनशास्त्रे प्रसिद्धा।

अत्र मूलशब्दः '*A priori*' इति प्रमाविशेषविशेषणरूपेण Immanuel Kant-नामकेन अष्टादशशतकीयेन जर्मन्-दार्शनिक-प्रकाण्डेन प्रथमतो भूरिशो व्यवहृतः। अस्माभिरत्र केवलं तर्कशास्त्रीय-मूलनियमाः दृष्टान्ततया सङ्गृहीताः। परन्तु तादृशा एव गणित-

शास्त्रीयनियमाः अपि पूर्वतःसिद्धाः भवन्ति। इत्थं 'सप्तपञ्चयोः समाहारात् द्वादश' इति वा 'ऋजुरेखाद्वयं एकस्मिन्नेव बिन्दौ परस्परं स्पृशति' इति वा अवश्यम्भावियाथार्थ्येन प्रमीयते। न तु प्रत्यक्षमनुमानं शब्दो वा अत्र प्रमाणम्, इन्द्रियाणां व्याप्तिज्ञानस्य आप्तोपदेशस्यापि अत्र अतन्त्रत्वात्। न केवलं पाश्चात्यदेशीयैरी-दृक्ज्ञानं प्रागनुभविकमित्युच्यते, अपि तु नीलकण्ठसोमयाजिना आर्यभटीयभाष्ये गोलाध्याये कण्ठत उच्यते -

"दोः समचतुर्बाहुकस्य कोटिसमचतुर्बाहुकस्य च चतुरस्रयोरे-कीकरणे चतुर्भुजं कर्णबाहुकं स्यात् इति। एतत् सर्वं युक्तिमूलमेव, न त्वागममूलम्। ततः प्रतिभाजुषां चक्षुर्हस्तादिव्यापारं विना मनसा निरूप्य एवं निर्णेतुं शक्यम्" इति। अत्र युक्तिमूलमिति पदस्य आनुमानिकमिति नार्थः। रेखागणितसिद्धान्ते या युक्तिरुपयुज्यते तस्यां भूयोदर्शनादिप्रयुक्तव्याप्तिग्रहादीनां नितरामप्रयोजनीयत्वात्।

यद्यपि बालकेभ्यः प्रथमपाठदानकाले सप्तफलानि पञ्चफलैः सह योजयित्वा द्वादशफलानि गणयित्वा सङ्ख्यायोजनादिकं पाठ्यते, तथाऽपि यदि भूयोदर्शनेन व्याप्तिबलादेव वा एतेषां नियमानां ज्ञानं स्यात् तदा 'सप्तसहस्रफलैः सह पञ्चसहस्रफलानां समाहारे द्वादशसहस्रफलानि भवन्ति एव इति न मया निश्चयेन ज्ञायते। यतः कदापि एतावतां फलानां गणना मया न कृता' इत्याद्यप्रतिपत्तिशङ्का सावकाशा स्यात्। परन्तु गणिते सम्यग्विज्ञाते

कस्यापि व्याप्तिस्मरणादेः पक्षधर्मताज्ञानादेश्च प्रयोजनं नानुभूयते। चिन्तनमात्रेणैव प्रत्यक्षानुमानाद्यनुभवमनपेक्ष्यैव एते नियमाः ज्ञायन्ते। तदेव पूर्वतःसिद्धप्रमितीनां प्रागनुभविकत्वम्।

'अधुना वृष्टिर्भवति' इति प्रमा यदि स्यात् तदा दर्शनस्पर्शनाभ्यामेव तस्याः अधिगतिः स्यात्। तस्मात् तादृशी प्रमितिः खलु अनुभूतेरनन्तरं साध्यत इति कृत्वा पश्चात्सिद्धा *(A posteriori)* इति कथ्यते। उताहो 'अधुना वृष्टिर्भवति अथवा न भवति' इति या प्रमा अस्माकं सदैव वर्तते तस्याः कृते दर्शनस्पर्शनादीनामक्षजानामनुभूतीनां किमपि प्रयोजनं नास्ति इति कृत्वा तादृशी प्रमितिः खलु पूर्वतःसिद्धा *(A priori)* इति ख्यायते।

अत्र पूर्वतःसिद्धपश्चात्सिद्ध इति पारिभाषिकपदयोः प्रयोगो भारतीयप्रामाण्यवादे यत् स्वतस्त्वपरतस्त्ववादद्वयं प्रसिद्धं तच्छायया नावगन्तव्यः। यद्यपि 'अहं सुखी' इति ज्ञानम्, 'अधुना कश्चित् शब्दो मया श्रूयते' इति ज्ञानं वा स्वतःप्रमाणं, तथाऽपि तयोः पश्चात्सिद्धत्वमङ्गीक्रियते, तादृशनिश्चयाय सुखानुभवस्य शब्दश्रवणस्य वा अपेक्षणात्। अत्र 'अनुभव'शब्द आङ्ग्लभाषायाः Experience इति शब्दस्य अनुवादरूपेण मया प्रयुज्यते। आनुभविकं यथार्थं ज्ञानं Empirical knowledge इति शब्द्यते।

तद्विपरीतं प्रागनुभविकं यथार्थं ज्ञानम् '*A priori* knowledge' - पूर्वतःसिद्धा प्रमितिः, यस्याः पर्यालोचने वयमत्र प्रवृत्ताः। यद्यपि 'अहमस्मि' इति प्रमा पूर्वतःसिद्धा, 'घटोऽस्ति' इति प्रमा

पश्चात्सिद्धा वा 'मृद्घटोऽयं सुवर्णनिर्मित न भवितुं शक्नोति' इति पुनः पूर्वतःसिद्धमेव मृत्सुवर्णयोर्मिथो युक्तिमात्रसिद्धात् विरोधात्, न तु सर्वे परतःसिद्धप्रत्ययाः 'घटोऽयं नीलः' इतिवत् व्यक्ति-विशेषविषयकाः भवन्ति। '0 डिग्री तापमात्रातः अधस्तात् सर्वत्र जलं हिमायते' इति सामान्यतः सर्वजलकणिकाविषयिणी या इयं व्याप्तिप्रमितिः, साऽपि परतःसिद्धा (पश्चात्सिद्धा वा) एव। 'सर्वे प्लवङ्गमाः लाङ्गूलिनः' इत्यपि भूयोदर्शनसाध्या काचित् परतःसिद्धा प्रमा। परन्तु 'यत् यत् घटते तत् तत् कारणजन्यम्' इति सार्वत्रिकं ज्ञानं (Every event must have a cause) पूर्वतःसिद्धम्। न हि तद्वारं वारम् 'इयं घटना कारणजन्या, इयमपराऽपि कारणजन्या, अन्यापि चिरव्यतीता घटना कारणजन्या आसीत्' इत्थं प्रत्यक्षानु-मानादिभिरनुभूय सामान्यीकरणद्वारेण निश्चीयते। यदि तया रीत्या अस्य निश्चयः स्यात् तर्हि निष्कारणं सङ्घटनं किमपि कल्पयितुं शक्येत। परन्तु प्रागभावप्रतियोगिनी काचित् घटना भवति, प्रत्युत तस्याः कृते कारणसामग्री नापेक्षिता इति कल्पयितुं तर्कयितुमपि न शक्यते। अन्यथाकल्पनाशक्यत्वात् 'यद् घटते तदेव कारणजन्यम्' इति ज्ञानं पूर्वतःसिद्धम्।

एषा व्याप्तिप्रमा खलु पूर्वतःसिद्धा - 'सर्वे चतुष्कोणाः अवर्तुलाः' इति प्रमितिवत्। ईदृश्याः पूर्वतःसिद्धायाः प्रमायाः धर्मत्रयमाधुनिकप्रतीच्यज्ञानमीमांसायामवधार्यते।

क) तत्रादौ युक्तिमात्रसिद्धानामेतासां याथार्थ्याय न्याय्यत्वाय च

नास्ति इन्द्रियानुभवापेक्षा (*A priori* knowledge is independent of experience for its truth and for its justification) यद्यपि सर्वेषां ज्ञानानामेव प्रारम्भः प्रथमोन्मेषो वा इन्द्रियानुभवादेव जायत इत्यत्र नास्ति विवादः। यस्य नास्ति चाक्षुषानुभवः तेन हरिद्वर्णस्य एव काऽपि प्रत्यभिज्ञा न भवति। हरिल्लोहितयोः को भेद इत्यपि तेन न ज्ञायते। परन्तु 'यद्द्रव्यं पूर्णतया हरिन्मात्ररूपि भवति तदेव द्रव्यं तस्मिन्नेव काले पूर्णतया लोहितमात्ररूपि न भवति' इति अवश्यम्भावित्वेन यदा अस्माभिः प्रमीयते, सा प्रमितिश्चाक्षुषज्ञानमधि न निर्भरति। तद्रूपद्वयविवेचनात्मकचिन्तामात्रेणैव सा प्रमितिर्न्याय्या यथार्था इति ज्ञायते। यद्यपि त्वचा अयुक्तेन मनसा किमपि ज्ञातुं न शक्यत इति न्यायमतं वयं स्वीकुर्मस्तथाऽपि 'यदि शीतस्पर्शवत् स्यात् तदा स्पर्शवत् स्यात्' इति ज्ञातुं नास्माकं त्वगिन्द्रियस्य अपेक्षाऽस्ति।

तस्मात् पूर्वतःसिद्धपदेन यत्पूर्वत्वमुक्तं, तन्न कालिकम्। कालिकविचारे तु सर्वं ज्ञानमनुभवात् परत एव जायते। नास्ति ततः प्राक्कस्यापि बोधस्य प्रसङ्गः। परन्तु अत्र पूर्वत्वं नाम न्याय्यत्वविषये निरपेक्षत्वम्। 'शुक्लमिदं पटम्' इत्यत्र प्रत्यक्षानुभवसापेक्षत्वात् तादृशनिरपेक्षत्वाभावात् तस्य परतःसिद्धत्वं, 'सप्तपञ्चसमाहारात् चतुर्विंशत्यर्धस्य प्रादुर्भावः' इत्यत्र तु तादृशनिरपेक्षतायाः सत्त्वात् पूर्वतःसिद्धत्वमिति इयान् विशेषः।

ख) अपि च केन प्रमाणेन ईदृशी प्रमितिरुपजायत इति चेत्

तर्कात्मकबुद्धेः स्वज्योतिषा एव एतादृशा आशयाः यथार्थतया प्रत्ययार्हतया न्याय्यतया च उपलभ्यन्त इति देकार्तेप्रभृतीनां शुद्ध-बुद्धिवादिनां मतम्। It is the natural light of Reason which makes us know these propositions to be true and justifies our believing in them. का इयं स्वभासा ज्योतिष्मती बुद्धिरित्यत्र प्रश्ने नास्ति दार्शनिकानामेकान्तत ऐकमत्यम्। यदा देकार्ते-महोदयेन सर्वा इन्द्रियानुभूतयः संशयसागरे निक्षिप्ताः 'सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च' - 'किं मया सन्देहलेशशून्यतया ज्ञायते' इति जिज्ञासासनाथेन मनसा स्वस्मिन् अन्तर्दृष्ट्या अवलोकितं च, तदा न केवलम् 'अहमस्मि' इति मितिस्तेन सर्वानुभवनिरपेक्षतया शुद्धबुद्धिज्योतिषा एव लब्धा, अपि च यज्ज्ञानं स्फुटतया विविक्ततया बुद्धिप्रभया एव द्योत्यते तज्ज्ञानं यथार्थमेव इति याथार्थ्यनिरूपणनिकषोऽपि शुद्धबुद्ध्या एव तेन प्राप्तः। उपनिषदां भाषामनुसृत्य अत्र इदं वक्तुं शक्यते। संशयवादप्रभञ्जनेन चञ्चलेषु इन्द्रियदीपेषु निर्वापितेषु इयमेव निष्कम्पा तर्कधीदीपशिखा अस्माकमज्ञानतिमिरादुद्धरति। जरद्-यवनविपश्चिन्मूर्धन्य-प्लेटो-महोदय-समारम्भा देकार्ते-मध्यमा लैब्नित्स्-पर्यन्ता या शुद्धबुद्धि-वादपरम्परा (Rationalism) पाश्चात्ये प्रवहमाना आसीत् तेषां मते सर्वेन्द्रियविवर्जितस्य ईश्वरस्य यथा अवैशद्यसंशयविपर्ययादि-दोषरहितायां बुद्धौ निखिलप्रमितिसद्भावः, तादृशः अस्माभिरपि बुद्धिमलमार्जनात् क्रमशः अधिकाधिकविषयाणां ज्ञानं गणितप्रमावत् निस्सन्दिग्धं पूर्वतःसिद्धं च प्राप्तव्यमिति। (न तु वयमपि सर्वज्ञाः

भवितुमर्हामि इति जैनवत् तेषां सिद्धान्तः। अस्माकं स्वभावतः अल्पज्ञत्वात्।)

ग) अपरश्च पूर्वतःसिद्धानां धर्मो भवति अवश्यम्भावि याथार्थ्यम् (necessary truth)। सौरमण्डले ग्रहाः नवसङ्ख्याका इति तु सत्यं, परन्तु समापतिकम् (contingent)। वस्तुत इयमस्मिन् जगति समापतिता वस्तुस्थितिर्यन्नास्ति अस्मिन् सौरमण्डले दशमो ग्रहः। परन्तु वयं जानीमः अन्यानि नैकानि सौरमण्डलानि सन्ति। तत्र सप्त वा एकादश वा शतं वा ग्रहसङ्ख्याः स्युरिति चिन्तयितुं शक्यते। अस्मिन्नेव सौरमण्डले कदाचित् नेप्चुन्-ग्रहस्य विनाशात् अष्टमात्रसङ्ख्यकाः ग्रहाः तिष्ठेयुः। परन्तु सर्वदा सर्वत्र अस्मिन् कल्पे कल्पान्तरे वा अस्मिन् नक्षत्रसरणीनां galaxy-मध्ये, अन्यत्र वा चतुष्पञ्चयोः सङ्घातात् नव एव स्यादित्यत्र नास्ति अन्यथा-चिन्तयितुमप्यवकाशः। तादृशी एव स्थितिः 'यस्य गुरुत्वमस्ति तस्य देशे अवस्थानमावश्यकम्' इति नियमस्यापि। अत्र सावधानतया इदं स्मर्तव्यम्। 'अन्यथा चिन्तयितुं न शक्यते' इति केवलं यस्य कस्यचित् कल्पनाशक्तेरियत्तामभिप्रेत्य नोच्यते। सन्ति बहवः स्वल्प-कल्पनावन्तः तर्कविधुराः ये एवं वदेयुः - 'जीवितमनुष्याश्चन्द्रमसि अटन्ति इति चिन्तयितुमपि न शक्नुमः', 'शताधिकवर्षेभ्यः चिरविध्वस्तानां नक्षत्राणां दर्शनमस्माभिरधुनापि चर्मचक्षुषा एव क्रियत इति तु न सम्भवति' इति। न हि तेषामतर्कणीयतया एव मनुष्याः चन्द्राटने असमर्थाः, चिरनष्टनक्षत्राणां दर्शनमसम्भवीति वा पूर्वतःसिद्धं भवति। न केवलं विश्वासदार्ढ्येन अन्यथा-

कल्पनादारिद्र्येण वा याथार्थ्यमवश्यम्भावि प्रमाज्ञानं च पूर्वतःसिद्धं भवति।

एवं निरूपितस्वभावानां पूर्वतःसिद्धप्रत्ययानां विषये त्रय आक्षेपाः निक्षिप्यन्ते शुद्धबुद्धिवादविद्वेषिभिः, प्रत्यक्षैकप्रमाण-वादिभिरिन्द्रियानुभववादिभिश्च। (इन्द्रियानुभववादः Empiricism इति शुद्धबुद्धिवादः Rationalism इति ख्यायेते।)

तत्रादौ प्रथमाक्षेपः। ननु यानि उदाहरणानि सङ्गृह्य पूर्वतः-सिद्धप्रत्ययानामनुभवनैरपेक्ष्यं प्रसाध्यते तानि सर्वाणि एव अनुमान-लभ्यानि। युक्तिर्नाम अनुमितेरेव नामान्तरं भवति। अनुमितेश्च अनुभवकक्ष्यान्तर्गतत्वात् नैताः प्रमितयः अनुभवनिरपेक्षाः पूर्वतःसिद्धाः वा इति चेन्नायं समीचीन आक्षेपः। बाढं तत्र केचित् पूर्वतःसिद्धप्रत्ययाः अनुमानेन प्राप्यन्ते। यथा -

'दण्डमिदं छत्रात् दीर्घतरं चेत् वृक्षश्चायं तद्दण्डात् दीर्घ-तरश्चेत्, वृक्षोऽयं छत्रादपि दीर्घतरः' इति। यद्यर्थशिरस्कस्तर्कः अनुमानेन आपाद्यत इति वक्तुं शक्यते। परन्तु अस्य अनुमानस्य पृष्ठभूमौ काचित् सामान्यव्याप्तिरस्ति यया विना अयं विशेषतर्कः अवश्यम्भावितया नापादयितुं शक्यते, स नियमः खलु एवं -

'यद् यस्मात् दीर्घतरं, तत् ततो ह्रस्वतरादपि दीर्घतरम्।'

If *A* is taller than *B* and *B* is taller than *C*, then *A* is taller than *C*.

केनापि मन्दबुद्धिना अयं नियमोऽपि भूयोदर्शनात् बहुषु स्थलेषु अनुभवेनैव ग्रहीतुं शक्यते। परन्तु अयं सामान्यनियमः स्वयंसिद्धो भवति। दृष्टान्तादिकं विनैव 'दीर्घतरः' इति सम्बन्ध-वाचकपदस्यैव अर्थप्रत्ययात् अस्य याथार्थ्यं प्रतीयते। तस्मात् अस्ति अनुमाननिरपेक्षं पूर्वतःसिद्धं ज्ञानम्।

अत्र गूढतरोऽयं विषयोऽपि विमर्शनीयः।

शतकृत्वोऽपि दर्शनात् पर्याप्तदृष्टस्थलेभ्यः शिष्टेषु अदृष्ट-स्थलेष्वपि धर्मद्वयस्य सहचारनैयत्यं कथं निश्चीयत इति या महती समस्या चार्वाकादीनामनुमानखण्डने, तन्निरासप्रसङ्गे च भारतीय-प्रमाणमीमांसायामालोच्यते सा पाश्चात्ये आरोहणानुमानसमस्यारूपेण (the problem of induction) परिचीयते। प्राचीनकालात् पाश्चात्ये अनुमानस्य द्वैविध्यं प्रसिद्धम्। तत्र अवरोहणं नाम सामान्यात् विशेषे सामान्यान्तरे वा अवतरणं। तद्यथा -

'सर्वे मुनष्याः जरायुजाः। कवयो मनुष्याः। तस्मात् कवयो जरायुजाः' इति।

अत्र यदि हेतुवाक्यानां निश्चितत्वं तदा सिद्धान्तवाक्यमपि नितरां निश्चितमेव। परन्तु आरोहणं नाम विशेषेभ्यः सामान्ये उद्गमनम्। तद्यथा -

'एतावत् कालपर्यन्तं ये ये काकाः दृष्टास्ते कृष्णाः। तस्मात् सर्वे काकाः कृष्णाः' इति।

अत्र सन्निकृष्टस्थलेषु काकत्वकृष्णत्वयोरविनाभावं दृष्ट्वा

दृष्टसमूहानतिरिच्य सर्वेषु सर्वकालेषु सर्वदेशेषु असन्निकृष्टस्थलेष्वपि तयोरेकप्रतियोगिकात्यन्ताभाववदवृत्तित्वमपरस्य अनुमीयते। न तु केनापि सार्वज्ञ्यं विना 'सर्व' पदवाच्यानामशेषाणां स्थलानां साक्षात्कारः सम्भवति। अत्र नैयायिकैः या सामान्यलक्षणाप्रत्यासत्तिः कल्प्यते, तामुद्दिश्य चार्वाकाणामयमुपहासः -

"ये तु प्रत्यक्षतो विश्वं पश्यन्ति हि भवादृशः।
किं दिव्यचक्षुषामेषामनुमानप्रयोजनम् ।।" इति।

परन्तु इत्थं यदारोहणानुमानं व्याप्तिग्राहकं भवति तस्यापि कृते व्याप्तिज्ञानस्य प्रयोजनमस्तीति John Stuart Mill-महोदयेन एकोनविंशशताब्दस्य अन्त्यभागे स्वकीय- System of Logic-ग्रन्थे लिखितम्। क्वचित् यत्सामानाधिकरण्यं दृष्टं तत्सर्वत्र एव स्यादिति कोऽयमाश्वासः? यद्यपि साधारणीकरणं तु मनुष्याणां स्वाभाविकं भवति, प्रायः तत्र भ्रमशङ्काऽपि जायते। सहस्रान् वङ्गदेशीयान् आमिषप्रियान् दृष्ट्वा सर्वे वङ्गदेशीया आमिषप्रिया इति अपरीक्षितरमणीया काचिदारोहरणानुमितिः प्रायो दाक्षिणात्यैः क्रियते। परन्तु नायं नियमो निरपवादः। अनुमितिरपि न यथार्था न्याय्या वा। तस्मात् व्याप्तिमूलिकानामन्यासामनुमितीनां न्याय्यत्व-स्थापनाय Mill-महोदयेन एवं रीत्या व्याप्तिग्रहोपायः सज्जितः।

'परिनिष्ठितधर्माणां विषये नैसर्गिकोऽयं वस्तुस्वभावो यत् अनुकूलतर्कसमर्थितप्रतिकूलतर्कवर्जितभूयोदर्शनेन ययोर्धर्मयोः नियतसहचारो दृष्टस्थलेषु नैकशो लभ्यते, तयोः धर्मयोरदृष्टस्थलेषु

अपि औत्सर्गिकतया सामानाधिकरण्यमवश्यम्भावि' इति कश्चित् पूर्वतःक्लृप्तः प्रत्ययः। अस्य नाम Law of Uniformity of Nature - 'निसर्गस्य सर्वत्र समानरूपतानियमः' इति ते वदन्ति। गृहीते अस्मिन् नियमे अवरोहणानुमानेनैव भूयोदृष्टेभ्यः कतिपय-स्थलेभ्यो निखिलस्थलेषु व्याप्तिज्ञानं सम्भवति। परन्तु अत्रैव प्रधाना जिज्ञासा अस्य मूलनियमस्य प्रमितिः कीदृशीति ?

नेयं प्रत्यक्षप्रमितिरस्माकमसर्वज्ञानां कृते सर्वसार्वत्रिक-निसर्गस्य अशक्यदर्शनत्वात्। न वा इयमनुमितिः, सर्वानुमितीनां पूर्वतः अस्य सिद्धेरावश्यकत्वात्, नेयं राजाज्ञा, श्रुतिस्मृत्यादितो वा गृहीता प्रमितिः। तस्मात् पूर्वतःसिद्धा एव इयं शुद्धबुद्धिमात्रगोचरा इति Bertrand Russell-महोदयः स्वकीय- Problems of Philosophy-ग्रन्थे उवाच। यद्यपि असौ इन्द्रियानुभाववादी एव दार्शनिकः, परन्तु अस्मिन् विषये स्वपूर्वपक्षिणां शुद्धबुद्धिवादिनामेव विजयं तेन उद्घुष्यते। तस्मात् अनुमानेनैव सर्वेषां पूर्वतःसिद्धानां ज्ञेयानां ज्ञानमुपपद्यते इति प्रथमाक्षेपः परिहृतः, अनुमानस्यापि मूले कासाञ्चित् पूर्वतःसिद्धमहाव्याप्तीनां ज्ञानस्य आवश्यकत्वात्।

अथ द्वितीयाक्षेपः। ननु अनुमानेन वेद्या अवेद्या अपि एते पूर्वतःसिद्धाः मानसप्रत्यक्षेणैव गृह्येरन्। चिन्तामात्रेण याथार्थ्य-मेतेषामाशयानां परिगृह्यत इति यदुच्यते तत्र चिन्ता नाम मानस-विमर्शविशेष एव। तस्मात् मानसप्रत्यक्षस्यापि प्रत्यक्षानुभवत्वात् पूर्वतःसिद्धप्रमितीनामपि अनुभवसापेक्षत्वमेव प्रसज्यते, न तु

अनुभवातीतपूर्वतःसिद्धता इति चेत् नायमपि आक्षेपो युक्तिं सहते। इच्छाद्वेषसुखदुःखादीनामात्मधर्माणामान्तरावस्थानामेव मानस-प्रत्यक्षत्वमङ्गीकरणीयम्। न हि सप्तपञ्चयोः समाहारात् द्वादशलाभः सुखदुःखादिवत् अनुव्यवसायवेद्यः साक्षिवेद्यो वा भवति। तेषां मनःषष्ठाणामिन्द्रियाणामविषयत्वात् आत्मगुणत्वाभावेन मनसा सह सन्निकर्षाभावाच्च।

तस्मादवश्यमिदमूहनीयं भवति यत् भारतीयदर्शनस्य सम्प्रदाये सर्वैरपि यानि प्रमाणानि अङ्गीकृतानि तेषु कस्यापि प्रमाकरणस्य उपयोगिता पूर्वतःसिद्धप्रमितिलाभे नास्ति एव। वस्तुतः पूर्वतःसिद्धप्रमितीनां विचार एव भारतीयप्रमाणशास्त्रे अदृष्टचर इति महदिदं विस्मयपदम्।

इदमत्र अवधेयम्। न हि शुद्धबुद्धिर्नाम (Reason) मानस-प्रत्यक्षस्य साक्षिज्ञानस्य (Introspection) वा नामान्तरम्। अहमधुना श्रान्तिमनुभवामि इति न हि शुद्धबुद्ध्या ज्ञायते, परन्तु मानसप्रत्यक्षेण। अस्यां सभायामुपस्थितानामन्येषां मद्व्याख्यानश्रवणजन्यः खेदो न हि मया मानसप्रत्यक्षेण ज्ञायते। परन्तु यदि केनापि अन्येन दशविषयाश्चिन्तिताः, अपरेण केनापि ततः पञ्चसङ्ख्यकाः विषया-श्चिन्तिताः तदा द्वितीयेन तु प्रथमतः अर्धसङ्ख्यकाः विषया-श्चिन्तिता इति मया शुद्धबुद्ध्या ज्ञातुं शक्यते, न हि मानसप्रत्यक्षेण।

अत्र किञ्चित् विषयान्तरमपि आलोचयितुमुचितं मन्ये। सर्वे न्याय्यप्रत्ययाः प्रत्येतुर्बुद्धिमपेक्षन्ते।

"वसन्ते सर्वसस्यानां जायते पत्रशातनम्।

मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः।।"

इति श्लोकं श्रुत्वा यस्य सम्यक्तया शाब्दबोधोऽपि न भवति, मोदमानपदे लक्षणायाः अविज्ञानाद् यवकणिशादिपदानां शक्तिग्रहाभावाद्वा, तैस्तु आप्तोपदेशतोऽपि इदं ज्ञानं न्याय्यतया नार्जयितुं शक्यते।

परन्तु पदशक्तिज्ञानसत्त्वेऽपि आकाङ्क्षादिपरिज्ञानेऽपि 'यववृक्षाः मधौ अपि हरितास्तिष्ठन्ति' इति वाक्यस्य अर्थज्ञानेनैव तस्य याथार्थ्यं न ज्ञायते। यतो न हि तद्वाक्यं तदभिलाप्यं ज्ञानं वाक्यघटकपदानामर्थमहिम्ना एव सत्यम्। परन्तु वस्तुस्थित्यनतिक्रमणरूपात् यथायथत्वात्। यद्यपि आप्तोच्चरितत्वात् यथार्थमिदं वाक्यमिति कोऽपि सञ्जातशाब्दबोधो विश्वसिति, नासौ विश्वासः तस्य स्वकीयार्थबोधेनैव न्याय्यः। वस्तुतः तादृशवृक्षास्तथैव तिष्ठन्ति न वा इति प्रत्यक्षेण परीक्षणावकाशात्। परन्तु दुहितृशब्दस्य योषित् शब्दस्य च शक्तिग्रहे सति 'सर्वाः दुहितरो योषितः' (All daughters are female) इति प्रमितिः शुद्धबोधमात्रेणैव जायते। नास्ति तत्र प्रमाणान्तरापेक्षा वस्तुस्थितिदर्शनप्रयोजनं वा, 'सर्वे क्रमेलकाः जन्तवः' इति प्रमितिवत्। अदृष्टक्रमेलकानामपि जन्तुविशेषनामरूपेणैव क्रमेलकपदेन परिचयात्। अत्रापि सन्ति केचिदतिमन्दमतिमन्तः। 'यदि एकस्य अश्वस्य क्षुरचतुष्टयं स्यात् तर्हि सप्तानामश्वानां क्षुरसंख्या का' इति पृष्टास्ते वदेयुः - 'न मया सप्ताश्वक्षुरगणना कदापि कृता, तस्मात् अश्वान् दृष्ट्वा, अश्वपालकान् वा पृष्ट्वा वदिष्यामि' इति। एतेषां कृते पूर्वतःसिद्धाः अपि परतःसिद्धा एव। परन्तु तेन पूर्वतःसिद्धप्रमितीनां पूर्वतःसिद्धत्वे

न कापि क्षतिः।

अन्ते मुख्यः कश्चिदाक्षेपः प्रत्यक्षप्रमाणे बद्धश्रद्धैरिन्द्रियानुभववादिभिः क्रियते पूर्वतःसिद्धप्रमितीनामकिञ्चित्करत्वं प्रतिपादयितुम्। ननु अस्तु वा प्रागनुभविकमिदं ज्ञानं - 'सर्वे नीलघटाः घटा एव', उत, 'यदि जीवन्नरः स्यात् तदा प्राणवान् स्यात्' इत्याकारकाः प्रत्ययाः अनुभवं नापेक्षन्त इति तु सत्यम्। परन्तु नात्र किञ्चिन्नूतनं ज्ञायते ; प्रकारांशे तु विशेष्यस्यैव अनुवादः क्रियते। नीलघटत्वशरीरमध्ये एव घटत्वं प्रविष्टं, 'जीवन्नरत्व' रूपविशेष्यमध्ये एव प्राणवत्त्वस्य अन्तर्भावो जीवत्वप्राणित्वयोः पर्यायत्वादित्यतः सर्वे प्राक्सिद्धत्वेन उदाहृता आशयाः वैश्लेषिकाः - All *a priori* propositions are analytic. यत्र प्रकारीभूतधर्मो नूतनो भवति, विशेष्यज्ञानेनैव यस्य प्रकारस्य अधिगमो न जायते, तादृशसांश्लेषिकप्रमितिः कदाऽपि पूर्वतःसिद्धा न भवति। तासां नैयत्येन अनुभवैकवेद्यत्वात्।

अस्य आक्षेपस्य सम्यगवबोधार्थमाशयानां प्रत्ययानां च द्विधाविभागद्वयं स्मर्तव्यम्। क्रीस्तीये अष्टादशशताब्दे इमानुयेल् कान्ट्-महाशयादारभ्य विंशशतकीये पाश्चात्ये प्रमाणशास्त्रे अनयोः भेदयोः महिमा विराजते। तत्र वैश्लेषिकसांश्लेषिकभेदस्तु वाक्यानां वाक्याभिव्यक्तानामाशयानां वा द्वैविध्यसाधकः। तद्यथा 'जपापुष्पाणि पुष्पाणि एव' इति 'मृद्घटः पार्थिवः' इति वा वैश्लेषिकं वाक्यं यत्र विधेयपदोपस्थाप्यो धर्मः, उद्देश्यपदेनैव अन्तर्भूततया गतार्थो भवति। 'इदं पुष्पं रक्तम्' इति, 'अस्मिन् कानने जपाकुसुमानि विकसितानि' इति 'इह भूतले घटोऽस्ति' इति वा वाक्यं सांश्लेषिकम्। 'इदं पुष्पम्' इति विशेष्यवाचकपदस्य अर्थे ज्ञात एव तस्य रक्तत्वं न

ज्ञायते। 'एतत्काननं' पदस्य योऽर्थः तच्छरीरे एव जपाकुसुमानां नास्ति अन्तर्भावः। लक्षणवाक्यं 'गुणत्ववान् गुणः' अथवा पर्याय-वाचिपदद्वयघटितं वाक्यं, यथा 'कम्बुग्रीवादिमन्तः पृथुबुध्नोदराः घटाः' इति वाक्यं च वैश्लेषिकं भवति। तत्र नास्ति जगद्विषये कोऽपि नूतनः अनधिगतपूर्वः सन्देशः, शब्दार्थव्याख्याने विश्लिष्य लक्षणकथने वा तस्य प्रायः तात्पर्यम्। परन्तु सांश्लेषिकवाक्यैः वस्तुस्थितिर्विज्ञायते। यथा 'श्वो वृष्टिर्भविता' इति वाक्यं न हि 'श्वः अद्यतः परं दिनम्' (Tomorrow is the day after today) इतिवत् विश्लेषणमात्रं भवति। अयं हि प्रथमो विभागः।

अतः परमस्माभिर्बहुधा परामृष्टो विभागो ज्ञानानां पूर्वतः-सिद्धपरतःसिद्धभेदतः एतस्मिन् भेदयुगले कृते वैश्लेषिकानामाशयानां प्रमितिः प्रत्यक्षाद्यनुभवं विनैव स्यात्; सांश्लेषिकानां मितिः पुनः परतःसिद्धा एव इति सहजतया प्रतिभाति।

परन्तु यदि तत् सत्यं स्यात् तर्हि पूर्वतःसिद्धप्रमाभिः जगतो वस्तुस्थितिविषये अस्माकं कोऽपि परिचयो न जायेत। सर्वे लोमशपशवः पशव एव इति पूर्वतस्सिद्धतया विजानन्तो वयं केवलं स्वपदव्याख्यानं कुर्वाणाः अक्षिणी निमील्य वैश्लेषिकवाक्यैः सिद्ध-साधनमेव करिष्यामः। तादृशं ज्ञातज्ञापनमेव पूर्वतःसिद्धप्रमायाः कार्यमिति अयमेव तृतीय आक्षेपः।

अत्र इदं ध्येयम्। यद्यपि 'सर्वे कृतकाः प्रागभावप्रतियोगिकाः'- 'All that begin to exist have a prior absence' इति आशयः वैश्लेषिकः स्यात्, तथाऽपि 'सर्वे कृतकाः कारणजन्याः' इति पूर्वतःसिद्धमपि सांश्लेषिकम्। यतः कृतकशब्देन प्रागभावप्रतियोगी

सूच्यते। न हि नियतपूर्ववर्तिवस्त्वन्तरजन्यत्वं प्रागभावप्रतियोगित्व-लक्षणान्तर्गतं भवति।

'कृतकोऽयं कारणवर्जितः' इति तु अकल्पनीयम्। परन्तु न हि 'कृतकोऽयमकृतकः' इतिवत् वदतो व्याघातात्मकम्। तस्मात् सन्ति केचित् वस्तुतत्त्वसूचकाः अविज्ञातज्ञापकाः सांश्लेषिकाः पूर्वतःसिद्धप्रत्ययाः - Synthetic *a priori* knowledge - सङ्ख्यागणितनियमानामपि ताद्रूप्यात्। यद्यपि अतिसरलानां गणितनियमानां लक्षणवाक्यवद्वैश्लेषिकत्वाभासो जायते, तथाऽपि Kant-महोदयेन दुरुच्छेदस्तर्कः प्रस्तुतो येन प्रमीयते 'सप्तपञ्चयोः समाहारात् द्वादश' इत्यादिप्रमा अवश्यं सांश्लेषिकत्वे सति पूर्वतःसिद्धा इति। तत्र द्वादशपदार्थमध्ये एव सप्तपदार्थपञ्चपदार्थयोश्च अन्तर्भाव इति कृत्वा यदि तस्य सिद्धसाधकत्वं, नाम वैश्लेषिकत्वं साधयितुमुद्युज्यते, तदा इदं स्मर्तव्यम् - न केवलं सप्तपञ्चयोः, अपि तु अष्टचतुरोः त्रिनवयोः समाहारादपि लभ्यते तदेव द्वादश इति। इत्थं च द्वादशेन सह अस्ति अनन्तानां सङ्ख्यासन्निवेशानां योजन-वियोजन-विभाग-गुणीकरणसमन्वितानामभेदः। न हि द्वादश-लक्षणमध्ये ते सर्वे अन्तर्भूताः। तथा सति द्वादशपदस्य शक्तिग्रहो युगकोटिभिरपि न स्यात्। तस्मात् द्वादशेन सह सप्तपञ्चयोः समाहारस्य अभेदो न तु उद्देश्यविधेयपदानां मिथः संसर्गतो ज्ञायते, परन्तु बाह्यानां सङ्ख्यात्मकपदार्थानां विषये इयं सांश्लेषिकप्रमिति-रनधिगतार्थविषयिणी पूर्वतःसिद्धा अकृत्रिमा प्रमितिरेव।

कथं तादृशी Synthetic *A priori* प्रमा सम्भवति इत्येव Kant-महाभागानां विश्रुततमस्य ग्रन्थस्य विषयः। जर्मन्-भाषया 'Kritik Der Reinen Vernuft' ('Critique of Pure Reason') 'शुद्धबुद्धेरन्वीक्षणम्' इति नाम्ना ख्यातस्य १७८१ क्रीस्ताब्दे प्रथम-प्रकाशितस्य अस्य ग्रन्थस्य दुरूहत्वम्, अतिगहनत्वं, प्राधान्यं च पाश्चात्यदर्शने अद्यतनेऽपि प्रतिस्पर्धिशून्यतया प्रसरति।



## सप्तमं व्याख्यानम्

# प्रत्यक्षानुव्यवसायस्मृतिपरीक्षणम्

भूतानागतवर्तमानविषया नित्यप्रमागोचरा
यस्यानन्दघनस्य विश्ववपुषो विष्णोर्विराडात्मनः।
प्रत्यक्षस्मरणानुमागमपथभ्रान्तैकविश्रान्तिदं
वन्देऽनन्तमशान्तिसन्ततिहरं तं सर्वधीसाक्षिणम्।।

शतार्धवर्णमालिका सुषुम्नधाम्नि कालिका।
ममेति मृत्युपारदा कृपां करोतु शारदा।।

चिदम्बरे चिरं नवं सुताण्डवैकपण्डितम्।
मदेकबान्धवं गुरुं नमामि दक्षिणातनुम्।।

ब्रिटेन्देशे अमेरिकायां च अर्वाचीनप्रमाणमीमांसायां विगतमर्धशताब्दं यावत् सम्यक् ज्ञानप्रकारभेदाः बहुधा विवेचिताः। तत्र सामान्यतो ज्ञानं चतुर्विधमिति केचित् सङ्गृह्य गृणन्ति। प्रथमं तावत् कस्यचिद्वस्तुमात्रस्य साक्षात्कारो यः खलु न किञ्चित्प्रकारकः। प्रमाविपर्ययादिविभागेन अस्पृष्टः असौ धर्मधर्मिभावनिर्मुक्तविषयताकः अनुभवः ।

१. 'Knowledge *de re*' उत 'knowledge of a thing' इति परिचीयते। कदाचिन्निष्प्रकारकमनभिलाप्यं निर्विकल्पकं ज्ञानं कदाचिद्व्यक्तिविशेषविषयकः तन्नामकर्मकवाक्येन अभिलाप्यः परिचयोऽपि (acquaintance) वस्तुमात्रज्ञानमिति ख्यायते। यथा निर्विकल्पकं ज्ञानं सत्यं वा मृषा वा इति प्रश्नो नोदेति, तथैव

'दुःखमनुभवामि', 'शर्करामास्वादयामि', 'असौ चैत्रं पश्यति', 'सा जलं स्पृशति' वा इत्युक्ते अनुभवस्य, आस्वादनस्य, ज्ञानस्य, दर्शनस्य, स्पर्शनस्य वा एकव्यक्तिर्विषयः इत्यतः वैशिष्ट्याविषयकत्वात् मिथ्याज्ञानस्य सम्भावना एव नास्ति एतादृशि वस्तुमात्रज्ञाने। निर्विशेषणं वस्तुमात्रमनेन गृह्यते (न हि सर्वदा अव्यपदेश्यमेतज्जातीयं व्यक्तिज्ञानम्।)

२. द्वितीयं कौशलात्मकं ज्ञानं, यत् अधिगतासु कलासु पारङ्गमत्व-विशेषः 'विद्या' इति प्रसिद्धा 'तुमुन्' प्रत्ययान्तपदेन च सूच्यते। तद्यथा - 'गातुं जानाति', 'निर्मातुं जानाति' इति। अत्र 'जानाति' इति पदस्य 'शक्नोति' इति एव अर्थः। दाक्ष्यरूपमिदं ज्ञानं 'knowing how' इति पदकदम्बकेन अभिधीयते। कस्यचिदपि कर्मणः शिल्पस्य वा सम्यगनुष्ठानसामर्थ्यमेव कौशलात्मकं ज्ञानमिति कथ्यते। नास्ति एवं विधेषु ज्ञानेषु प्रतीतेर्न्याय्यत्वस्य याथार्थ्यस्य वा कापि प्रसक्तिः। परन्तु अत्रापि क्रियायाः सम्यक्त्वम् अपेक्षितमेव। अन्यथा यः कोऽपि गायति स एव गातुं जानाति इति वक्तुं युज्येत। परन्तु नैवमुच्यते। सम्यग्गानमेव गानविद्यायाः परिचायकं भवति, न हि गानमात्रम्। गातुं यतते, गातुं जानाति इत्यनयोर्भेदात्। तथा च यदि कस्याश्चित् कन्यायाः चित्राङ्कनविद्यायां पारङ्गमत्वमस्ति तस्याश्चित्राङ्कनज्ञानं न्याय्यं वा यथार्थं वा इति जिज्ञासा एव निरवसरा। कौशलात्मकज्ञानस्य व्यवसायात्मकत्वाभावात्।

३. तृतीयं वस्तुस्थितिविषयकं ज्ञानं। तदेव न्याय्यं निश्चितं यथार्थं चेत् प्रमेति परिचीयते। सा च प्रमा विशेष्यप्रकारशालिनी तद्वति

मुख्यविषयत्वेन एतेषु व्याख्यानेषु अस्माभिर्विशेषतः परीक्षिता। एतस्याः स्वरूपज्ञापकं नाम 'Knowing that' - इति भवति। एतज्जातीय-ज्ञानस्य अभिलापः आदितः 'यत्' कारेण वा, अन्ततः 'इति' कारेण वा उद्देश्यविधेयवद्भिर्वाक्यैः क्रियते। न केवलं चैत्रः मैत्रं जानाति, परन्तु चैत्रः जानाति यत् मैत्रश्चतुरः। अहमीश्वरं न जानामि, साक्षात्कृतेरभावात्। परन्तु ईश्वरः सर्वद्रष्टा इति खलु जानामि विश्वसिमि वा। मैत्रश्चतुर इति आशयो यदि यथार्थः स्यात्, अपि च तत्प्रतीत्यै चैत्रस्य सविधे यदि न्याय्यतासमर्थकयुक्तयः सन्ति तदा चैत्रस्य मैत्रश्चतुर इति ज्ञानं प्रमा - (Knowledge) इति कथ्यते। प्रमाणमीमांसामुख्यविषयीभूतमेतज्जातीयं ज्ञानमेव प्रत्यक्षेण, अनुमानेन वा आप्तोपदेशात् वा, पूर्वतःसिद्धतया वा, स्मरणाद्वा अनेकशः प्राप्यत इति अस्माकं निश्चयः, कदाऽपि न्याय्यतया न प्राप्यत इति सार्वत्रिकसंशयवादिनां पूर्वपक्षः।

४. चतुर्थं तावत् Moral Knowledge नैतिकं ज्ञानं कर्तव्याकर्तव्य-विषयकं चिकीर्षाकृतिजनकं वा ज्ञानं यस्य स्वरूपं साधुकर्मणि उपादानबुद्धिरूपा, असाधुकर्मणि हानबुद्धिरूपा इति केचित्, अवश्यकर्तव्यताबोधपूर्वकस्वप्रचोदनारूपमित्यपरे। यद्यपि अस्ति तादृशेऽपि ज्ञाने भ्रमत्वयाथार्थ्ययोर्विचारयोग्यता तथापि न केवल-मिदमित्थमिति वस्तुस्थितिज्ञानमात्रमिदं प्रत्युत कर्मानुष्ठानफलक-मिदमिति हेतोः 'knowing that', 'knowing how' उभयात्मकम् अस्या स्वरूपम्। अन्यथा "जानामि धर्मं न च मे प्रवृत्तिः" इति - अनुभवितृषु आचरणपराङ्मुखेषु अस्मादृशेषु अपि धर्मप्रमायाः वप्रसङ्गात्। ये उत्सर्गतो धर्ममाचरन्ति अधर्माच्च विरमन्ति त एव नैतिकज्ञानवन्तस्तस्मात न हि धर्मप्रमा धर्मतत्त्वमात्रज्ञानम्।

परन्तु सम्यग्धर्मानुष्ठानप्रावण्यमपि तादृशप्रमालक्षणान्तर्गतमिति-हेतोस्तस्य चतुर्थप्रकारत्वम् उच्यते। अस्य प्रमात्वमेव समेषामभिमतं न भवति। एकस्मिन् काले देशे समाजे च धर्मरूपेण यदङ्गीक्रियते कालान्तरे देशान्तरे च समाजे तस्यैव अधर्मरूपेण अङ्गीकारात् 'अयं धर्मः' इति ज्ञानस्य वस्तुतन्त्रं किमपि याथार्थ्यमस्ति न वेति महती शङ्का विराजते।

अधुना तृतीयप्रकारस्य ज्ञानस्य पुनः अवान्तरभेदाः विविच्यन्ते। इदं सप्रकारकं वस्तुस्थितिविषयकं न्याय्ययथार्थज्ञानं पूर्वतःसिद्ध-मवश्यम्भाविसत्यं वा परतःसिद्धमापतिकसत्यं वा इति द्वेधा। किमपि वस्तु स्वस्मात् न भिद्यत इति ज्ञानं पूर्वतःसिद्धम्। तुलसीपत्रनिर्यासं कफहारकमिति ज्ञानं तावत् परतःसिद्धम्। परतःसिद्धमापतिकसत्य-ज्ञानं पुनर्बाह्यवस्तुस्थितिविषयकं वा आन्तरचित्तावस्थाविषयकं वा इति द्वेधा। बाह्यवस्तुस्थितिविषयकं ज्ञानं भूतविषयकं, वर्तमान-विषयकम्, अनागतविषयकं वा इति त्रिधा। तत्र भूतविषयकं ज्ञानं साक्षात् स्मृतिरूपं परोक्षमनुमितिशाब्दरूपं वा भवति। अनागतविषयकं न्याय्यनिश्चितप्रमाज्ञानं कदाचिदपि भवति न वा इत्यत्र महानस्ति विवादः। ज्योतिषगणनादिभिः, भूयोदर्शनमूलकेन सम्भावनासङ्ख्या-कलनेन (by statistical calculation of probabilities), प्रातिभज्ञानेन वा अनागतज्ञानं यथार्थमपि संशयरन्ध्ररहितं प्रतिकूल-तर्काद्यपराहतं कदाचिज्जायते न वा इति ध्येयम्। वर्तमानविषयकं बाह्यगोचरं ज्ञानं पुनः प्रत्यक्षं, शाब्दम्, अनुमितिरिति त्रिधा विभज्यते। न तु उपमित्यर्थापत्त्यनुपलब्धिप्रभृतीनां स्वातन्त्र्येण अङ्गीकारः प्रतीच्यदर्शने दृश्यते।


सम्यग्ज्ञानम् (Knowledge)
वस्तुमात्रज्ञानम् (Knowing *de re*)
कौशलात्मकज्ञानम् (Knowing-How)
सप्रकारकम् इदमित्थमिति वस्तुस्थितिज्ञानम् (Knowing *de dicto*)
धर्माधर्मज्ञानम् (Moral Knowledge)
अवश्यम्भाविसत्यज्ञानं पूर्वतःसिद्धप्रमा (*A priori* knowledge of neces-sary truths)
सङ्घटितसत्यज्ञानं परतःसिद्धम् (*A posteriori* knowledge of con-tingent truths)
बाह्यविषयकम्
आन्तरविषयकम्
भूतगोचरम्
अनागतगोचरम्
वर्तमानगोचरम्
स्वचित्तज्ञानम् (अनुव्यवसायः)
परचित्तज्ञानम्
प्रत्यक्षम्
अनुमितिः
शाब्दम्
स्मृतिः (साक्षाज्ज्ञानम् अतीतस्य)
शब्दादिजन्यं परोक्षम्
अवरोहिणी (Deductive)
आरोहिणी (Inductive)

आन्तरविषयकं वस्तुस्थितिज्ञानमपि स्वचित्तज्ञानं परचित्तज्ञानमिति द्वेधा। तत्र अनुव्यसायापरनामकमन्तर्निरीक्षणमेव स्वचित्तज्ञानं न वेति बहुवादविवादपुरःसरं नैकेन पाश्चात्यप्रमाणमीमांसकेन बहुषु ग्रन्थेषु विचारितम्। 'देवदत्तो मयि स्निह्यति', 'आचार्यः कुपितः', 'मम श्रोतारः अधुना गृहं जिगमिषन्ति' इत्यादीनि परचित्तविषयकप्रत्ययप्रकाशकानि वाक्यानि तु अस्माभिः निःशङ्कतया सर्वदैव प्रयुज्यन्ते। परन्तु केन प्रमाणेन वयं परगतभावान् जानीमः, कथं तादृशप्रतीतयः प्रमापदवाच्या इत्यत्रापि अस्ति पाश्चात्ये भूयान् विचारः। किं बहुना प्राच्येऽपि साङ्ख्यकारिकासु पुरुषबहुत्वे स्थापितेऽपि एकजीववादोऽपि लब्धावसरः, अपि च योगाचारबौद्धाचार्येण धर्मकीर्तिना सन्तानान्तरसिद्धिरिति[1] ग्रन्थो व्यरचि। तदनन्तरं योगाचारसम्प्रदायानुयायिना एव रत्नकीर्तिना सन्तानान्तरदूषणं[2] नामकं ग्रन्थान्तरं निर्मितं। तस्मात् परेषामात्मनामस्तित्वमपि प्रमाणसिद्धं न वा इति विप्रतिपत्तिरस्माकं देशेऽपि प्रादुर्बभूव।

इदानीं प्रत्यक्षज्ञानविषये वादचतुष्टयं सङ्क्षेपतो विचार्यते।

तत्र मरीचिकास्वप्नादिविपर्ययशङ्काकुलितानां सार्वत्रिकसंशयवादभीतानां दार्शनिकानां स्थूलरूपेण कक्ष्याद्वयं परिगणितम्। केचित् ज्ञाननिरपेक्षवस्तुवादिनः 'अस्ति प्रत्यक्षस्य बाह्यो विषय' इति मन्यन्ते, केचिच्च बाह्यापलापिनो ज्ञानसापेक्षविषयवादिनो 'नास्ति कश्चित् अविज्ञातोऽपि सत्तावान् पदार्थ' इति मन्यन्ते। प्रथमकक्ष्यायां तावत् ऋजुसाक्षाद्बाह्यप्रत्यक्षवादिनः केचित्,

केचित्, अवभाससम्भावनानिर्मितार्थवादिनः केचिदिति चतुष्टयी गतिः।

| | | |
|---|---|---|
| बाह्यार्थसत्त्ववादः (Realism) | - | ऋजुसाक्षाद्बाह्यप्रत्यक्षवादः (Naive/Direct realism) |
| | | परीक्षितपरोक्षबाह्यार्थवादः (Scientific/Indirect realism) |
| बाह्यार्थनिषेधवादः (Anti Realism) | - | विज्ञानवादः (Idealism) |
| | | अवभासवादः=अवभाससम्भावनानिर्मितार्थवादः (Phenomenalism) |

एते सर्वे वादा एव कति प्रश्नान् अधिकृत्य वैमत्यमाश्रित्य प्रवर्तिताः। प्रत्यक्षाभासात् प्रत्यक्षप्रमा कथं भिद्यते? येन इन्द्रियेण वस्तुनो यथार्थज्ञानं जन्यते तेनैव यदि कदाचिद्भ्रान्तिरपि जन्यते तदा किमपि प्रत्यक्षं यथार्थमेव इति कथं निश्चेतुं शक्यते? इन्द्रियेण सह यस्य बाह्यवस्तुनः सन्निकर्षो भवति, तस्यैव अविकलस्य वस्तुनः प्रत्यक्षज्ञाने भासमानता उताहो तस्य प्रतिबिम्बस्य, अर्वाग्भागस्य, तद्गुणानां वा? यदि बाह्यं वस्तु निःसामान्यं स्वलक्षणात्मकं प्रतिव्यक्तिभिन्नं भवति तदा सविकल्पकप्रत्यक्षे गृह्यमाणं सामान्यधर्मविशिष्टं नामक्रियागुणसमन्वितं यद्वस्तु भासते तस्य काल्पनिकत्वं कथं निवार्यते? चक्षुरिन्द्रियस्वभावेन आलोकमहिम्ना दूरत्वनैकट्यवशाद्वा यदि भासमानद्रव्यस्य आकृतिरूपपरिमाणादिकं विपरिवर्तते,

तदा का आकृतिः किं परिमाणं किं वा रूपं दर्शननिरपेक्षतया पारमार्थिकवस्तुनि स्वगतधर्मत्वेन तिष्ठति? इत्यादयो बहवः प्रश्नाः दत्तविचित्रोत्तराः पाश्चात्यप्रत्यक्षप्रमाणविमर्शकैः। तस्मात् अति-गम्भीरविचारसमुद्रात् द्वित्रास्तरङ्गाः अत्र समासतः प्रस्तूयन्ते।

यद्यपि घटस्य पृष्ठभागमुदराभ्यन्तरं च अपश्यन्तो वयं समग्रं घटं युगपत् न पश्यामः तथापि साक्षात् घटमेव चक्षुषा पश्यामः, यो घटः अन्यैः सर्वैः स्वस्वचक्षुषा दृश्यते स एव मयाऽपि दृश्यते, मम दर्शनात् प्रागपि असौ एव घटः अत्र आसीत्, यदि अव्यवहितोत्तर-काले केनापि न भज्यते तदा मम चाक्षुषज्ञाननाशादनन्तरमपि स एव स्थास्यति इति लोकसिद्धं मतं हि ऋजुसाक्षाद्बाह्यप्रत्यक्षवादः। तस्य ऋजुत्वं नाम सर्वथा लौकिकस्य अनुभवस्य सरलतया अनुसरणम्। यादृशः अनुभवः तादृश एव रूपस्पर्शस्वादगन्धवान् बाह्यार्थः। न हि पटरूपं पुष्परूपं वा अस्माकं चक्षुस्स्वभावेन अंशतोऽपि सृज्यते। यदि अस्माकं नयनानि एव न स्युस्तथापि इत्थं रूपवन्ति एव पटपुष्पादीनि द्रव्याणि स्युरिति बाह्यसाक्षात्प्रत्यक्षवादिनां मतम्। तत्र साक्षात्त्वं (directness) नाम अव्यवहितत्वं निरन्तरालत्वं वा। तत्र व्यवधानशब्देन कालव्यवधानं देशव्यवधानं वा न बोद्धव्यम्। अधःस्थितात् सानुदेशात् दृश्यमानः तिरुमलापर्वतशीर्षः तु देशतो व्यवहितमेव। न हि चक्षुरिन्द्रियं, नयनकृष्णसारः, अक्षिपटलं वा तत्समानदेशं गत्वा तं गिरिशिखरं गृह्णाति। प्राप्यकारित्वमतस्य आधुनिकपाश्चात्ये सर्वथा अनङ्गीकारात्।

अपि च महाकाशे लक्षकोटियोजनदूरस्थनक्षत्रस्याऽपि साक्षादेव दर्शनं जायते। अस्माकं दर्शनकाले एव तस्य नक्षत्रस्य स्थितिरपि नावश्यकी (चिरध्वस्तस्यापि नक्षत्रस्य) अधुनादर्शनसम्भवात्। आलोकरश्मीनामस्मच्चक्षुपर्यन्तागमनकालस्य दैर्घ्यात्। तस्मात् साक्षादिति पदस्य कोऽर्थः?

केनचित् मानसप्रतिबिम्बेन अवभासेन इन्द्रियजन्यप्रतिभासेन वा व्यवहितं न भवति अस्माकं प्रत्यक्षज्ञानं - बाह्यवस्तूनि एव अपरोक्षतया ज्ञाने भासन्ते, यैश्च अर्थैः प्रत्यक्षज्ञानं जन्यते त एव तद्रूपेणैव ज्ञाने भासन्ते। न हि भासमानमालम्बनमेकं, कारणीभूतबाह्यार्थश्चान्य इति एव साक्षात् पदेन सूच्यते। अत्र इदमवधेयं - साक्षात् वस्तुग्राहकं यथार्थप्रत्यक्षमेव भवति। प्रत्यक्षाभासकाले स्वप्नादिकाले वा कश्चिदाभासमात्रं, स्मृतिप्रतिभासमात्रं वा इन्द्रियविषयो भवति अथवा अन्यथाख्यातिवादानुसारेण तत्रापि अन्यत्र सतां बाह्यवस्तूनामेव ग्रहणमित्यस्मिन् विषये नास्ति साक्षाद्बाह्यार्थवादिनामैकमत्यम्। परन्तु ज्ञाने लवमात्रमपि अस्वच्छत्वं नास्ति - स्वच्छकाचसदृशं ज्ञानं वर्णहीनं निराकारं स्वरूपसन्तं विषयमेव प्रकाशते - न हि ज्ञातताविशिष्टं विषयम् - इत्येव एतेषामभिप्रायः। सन्निकृष्टं फलमिदं यथा उपनेत्रयुतेन नेत्रेण दृश्यमानमपि साक्षादेव दृश्यते। न हि उपनेत्रोपरि पतितं फलप्रतिबिम्बं साक्षात्कृत्य तदनन्तरं बिम्बरूपं फलमनुमीयते। तथैव भ्रमभिन्नस्थले अस्माकं प्रत्यक्षज्ञानम्। द्वितीयार्थं कर्मत्वं विवेचयतां वैयाकरणानां विभागपरिभाषामाश्रित्य वक्तुं शक्यते - प्रत्यक्षज्ञान-

विषयः अस्मिन् मते न हि विकार्यं निर्वर्त्यं वा कर्म, परन्तु आप्यमात्रं कर्मेति। यथा ग्रामं गच्छति इत्यत्र गमनेन ग्रामं न सृज्यते विक्रियते वा, केवलं प्राप्यते। तथैव फलं पश्यति इत्यत्रापि फलमेव अविकृतं साक्षात् गृह्यते।

परन्तु बाह्यविषयाणां सत्तायामविवदमानाः अपि वक्रबाह्य-वादिनो बाह्यार्थं भौतविज्ञानदृष्ट्या विवेचयन्तः साक्षात् प्रत्यक्ष-वादिनामिदं सरलं मतं न सहन्ते।

तत्र सरलबाह्यार्थवादे आक्षेपद्वयं प्रक्षिपन्ति बाह्यानुमेय-वादिनः।

प्रथमतस्तावत् Wilfrid Sellars-महोदयेन Pittsburgh-विश्वविद्यालये दर्शनाध्यापकपदाभिषिक्तेन पूर्वस्मिन् शताब्दे १९६३ काले कथितम्[3]- अस्ति अस्य साधारणकाष्ठमयस्य लिखनफलकस्य मूर्तिद्वयम्। एका चर्मचक्षुर्ग्राह्या प्रतिभासमाना (Manifest image) व्यावहारिका मूर्तिः यस्याः चतुष्कोणाकृतिः, चरणचतुष्टयं, पीतकपि-लकृष्णादिरूपं, काठिन्यं, निरवकाशत्वं, गतिहीनत्वमपि सिद्धम्। परन्तु नेयं मूर्तिः पारमार्थिकी भौतपदार्थविज्ञानिभिः निर्णीता। अस्यैव परीक्षकप्रमाणिता अपरा मूर्तिरस्ति (Scientific image)। सूक्ष्माणुवीक्षणयन्त्रैरपि न सर्वथा दृश्या सा मूर्तिस्तु परमाणुपुञ्जरूपा। तत्र प्रत्येकस्मिन् काष्ठपरमाणौ अपि ऋणात्मकतडित्कणिकाः धनात्मकतडित्कणिकाश्च केन्द्रीयकणिकविशेषं परितः चङ्क्रमन्ते। तेषां तडित्कणतरङ्गाणां चङ्क्रमणं परमाणूनामन्तर्वर्तिनि अवकाशे

कश्चित् नियमतः कथञ्चिच्च अनिर्धारणीयतया घटते इत्यतो न हि लिखनफलकरूपेण यद्दृश्यते तदेव वस्तु सत् इति प्रथमा युक्तिः।

द्वितीया युक्तिः तावत् John Locke-महोदयेन (१६३२-१७०४) स्वकीयमहाग्रन्थे An Essay Concerning Human Understanding[4] नामके प्रतिपादितमारोपितगुणमुख्यगुणयोः कञ्चिद्-भेदमाश्रित्य प्रवर्तते। रूपं, स्वादः, गन्धः, स्पर्शः, उत्तापः - एते प्रतीयमानवस्तुधर्माः भौतविज्ञानप्रतिपादिते परमाणुपुञ्जरूपे वस्तुनि न वर्तन्ते। परन्तु केनचित् प्रमात्रा प्रत्यक्षविषयीभूतेषु एव वस्तुषु इन्द्रियविषयसन्निकर्षमहिम्ना प्रतीयमानतयैव आविर्भवन्ति।

यदि अस्माकं चक्षुर्गोलकमध्ये Retina इति ख्याते अक्षिपटले रक्तपीतादिज्ञानजनकानि स्नायुतन्त्रीरूपाणि सूक्ष्माङ्गानि न स्युः तदा वस्तूनि रक्तपीतादिरूपमपि न स्युः। न केवलं न दृश्येरन्, परन्तु न वर्तेरन्नपि। तस्मात् एते धर्माः उपचरितगुणाः आरोपितधर्माः secondary qualities इति उच्यन्ते। परन्तु जडवस्तूनां सूक्ष्मावयव-सङ्ख्या, परिमाणं (न हि दृश्यमानं परिमाणं परन्तु स्वरूपसत् परिमाणम्), पारिमाण्डल्यम्, आकृतयः, गतिर्वेगो वा वस्तुतः ज्ञान-निरपेक्षतया परमाणुषु तिष्ठन्तीति कृत्वा ते धर्माः मुख्यगुणाः primary qualities इति कथ्यन्ते। अस्मिन् भेदे कृते यथा वयं स्वचक्षुषा पश्यामो वस्तुतस्ते बाह्यार्थाः अपि तथा इति सारललौकिकमतं तु भज्यत एव। वास्तविकबाह्यार्थानां नित्यपरोक्षत्वात्। बाह्यार्थः अस्ति

परन्तु न प्रत्यक्षेण साक्षाद्दृश्यत इतीदं मतं विंशशताब्दे Bertrand Russell, Wilfrid Sellars-इत्यादिभिः भौतिकविज्ञानेषु निरूढ-विश्वासैर्दार्शनिकैः समर्थितम्।

परन्तु मुख्यारोपितगुणयोर्भेदे कृते सर्वदृश्यगुणानामेव आरोपितत्वं तदाश्रयस्य बाह्यद्रव्यस्य नित्यप्रत्यक्षागोचरत्वात् तद्विषयकव्याप्तिज्ञानस्य असम्भवात् अनुमानेनापि अप्रमेयत्वं प्रसज्यत इतिकृत्वा बाह्यार्थभङ्गे एव अस्य पर्यवसानमिति ये वदन्ति, ते एव बाह्यार्थनिषेधपराः आभासमात्रसत्तावादिनः। प्रागुक्तरीत्या बाह्यार्थ-वादविरोधिनोऽपि कक्ष्याद्वयं भजन्ति। तत्र केचित् विज्ञप्तिमात्रता-वादिनः Bishop George Berkeley (१६८५-१७५३) - अनुयायिनो मन्यन्ते, केवलं विज्ञानानि तदाश्रयाश्च आत्मानः परमार्थतः सन्ति, इति। नास्ति कश्चित् बहिर्देशाश्रिताः भौतिकपदार्थाः, ये नीलसुखादयः षड्जशीतलसौरभसंवेदनात्मकाः आभासास्त एव साक्षात् प्रत्यक्ष-विषयाः। अपि च तद्ग्राहकं प्रत्यक्षज्ञानं स्वयमपि, ततोऽभिन्नम् आभास एव तस्मात् तानि अन्तर्ज्ञेयानि एव बहिर्वदवभासमानानि स्तम्भकुड्यादिरूपेण दृश्यन्त इति प्रतिपादयन्ति। 'यन्नानुभूयते तन्न वर्तते', 'सत्ता नाम दृश्यत्वमेव' (Existence is perceived-ness) इति दृष्टिसृष्टिवाद एव विज्ञानवाद- (Idealism) नाम्ना प्रतीच्ये परिचीयते। तत्र पाश्चात्यविज्ञानवादी बर्क्ले-महोदयः ईश्वरं सर्वज्ञातारमङ्गीकृत्य अन्ततो गत्वा सत्तायाः लक्षणं न हि अस्मदीयज्ञानविषयत्वं, परन्तु ईश्वरज्ञानविषयता एव इति विवक्षुर्वाशिष्ठदर्शनमिव महानात्मनः कस्यचित् सर्वप्राणिसाधारण-

सृष्टिकल्पयितुरीश्वरस्य मनोविजृम्भणमात्रमिदं जगत् इति प्रतिष्ठाप्य वस्तूनामस्मत्प्रत्यक्षनिरपेक्षत्वेऽपि ईश्वरदृष्टिसृष्टत्वमेव अवोचत्। प्राचीनयोगाचारबौद्धानां विज्ञानवादस्तु निरीश्वरत्वात् किमपि लोकसाधारणं बहिर्विश्वं नाङ्गीकर्तुं शक्नोति - इयानेव विशेषः। ननु यदा रात्रौ वयं सुप्ताः अस्मिन् प्रकोष्ठस्थितानि काष्ठासनादीनि न पश्यामः तदा मानुषज्ञानस्य अविषयीभूतानि तानि कच्चित् प्रणश्यन्ति वा न वेति विज्ञानवादिनां कृते चिरन्तनी समस्या बर्क्ले-महोदयस्य कृते अनायाससमाधेया भवति। तत्कालेऽपि तेषां नरागोचरपदार्थानामीश्वरप्रत्यक्षस्य विषयत्वात् ते न नश्यन्ति, ईश्वरचित्ताकाशे वसन्ति एव इति सुघटः पन्थाः।[5]

क्रिस्तीयविंशशताब्दे अस्य विज्ञानवादस्य खण्डनं बहुधा कृतम्। साकारविज्ञानवादो ज्ञानतद्विषययोश्च अभेदवादो वा अस्य लोकयात्राविरोधिनो मतस्य बीजमिति स्थापयित्वा बर्क्लेप्रदर्शितान् सहोपलम्भनियमादीन् हेतून् बहुधा निराकृत्य बाह्यसाक्षात्प्रत्यक्ष-वादिनामग्रगण्येन मूर्-(G.E.Moore)-महोदयेन अद्यप्रभृति शत-वर्षेभ्यः प्राक् स्वकीये A Refutation of Idealism[6]- निबन्धे नास्ति नीलनीलज्ञानयोर्नियतसहोपलम्भः, सत्यपि नियतसहोपलम्भे ज्ञानार्थयोः 'सह'पदप्रयोगवाच्ययोरेकान्ताभिन्नयोः अभेदानुमाने ऐक्यस्थापने वा नासौ सहोपलम्भः सद्धेतुः - ज्ञानार्थयोरभेदकल्पना तु स्ववचनविरोधेनैव बाधिता इति प्रत्यपादीत्।

अपि तु नीलज्ञानं, पीतज्ञानं, रक्तज्ञानमेवं विधया तुलनया निराकारज्ञानांशे अनुगमं नीलपीतादिविषयांशे च वैजात्यं दर्शयित्वा पुनर्नीलदर्शनं, नीलस्मरणं, नीलकल्पनमेवंविधया तुलनया नीलांशे अनुगमं दर्शनस्मरणकल्पनांशेषु वैजात्यं च दर्शयित्वा निराकारं ज्ञानम् आकारार्पकात् विषयाद्भिद्यत इति प्रदर्शयितुं शक्यते। एवंरीत्या मूर्-महोदयेन दृष्टिरेव विश्वमिति मतं खण्डितम्।

अपि च नीलदर्शनं नाम नीलस्य दर्शनमित्येव विश्लेषणमनुभवसिद्धम्। न हि 'यन्नीलम् तदेव दर्शनम्' इति सामानाधिकरण्येन अन्वयः। आत्मगुणानां ज्ञानानां रूपाद्यसम्भवात्। नीलांशस्यापि पुनर्दर्शनात्मकत्वे नीलस्य दर्शनं, दर्शनस्यैव स्वदर्शनमिति स्वात्मनि क्रियाविरोधः। 'नीलस्य' इत्यत्र षष्ठ्याश्च निरर्थकत्वमपि प्रसज्येत इति मूर्-महोदयस्य अतिगम्भीरविज्ञानवादखण्डनस्य दिङ्मात्रनिर्देशः। एतावता भग्नोऽपि विज्ञानवादो बर्क्ले-महोदयेन दत्तामेकामतिप्रबलां प्रधानां युक्तिमाश्रित्य (Master Argument) अधुनापि बाह्यार्थवादपूर्वपक्षतया क्षीणतररूपेण जागर्ति। सा युक्तिस्तावदियम् - अस्ति सर्वथा बुद्धेर्बाह्यो ज्ञानाविषयः अप्रमेयः कश्चित् पदार्थ इति कल्पयितुमपि न शक्यते। कल्पनाविषयश्चेत् ज्ञानविषय एव इति अस्मात् हेतोः। यस्तु अकल्पनीयः स हि असम्भवस्तस्मात् अज्ञेयत्वं हि असत्त्वमिति। परन्तु यन्मया न ज्ञायते तन्नास्ति इति ब्रुवता विज्ञानवादिना बहवो दोषा आलिङ्ग्यन्ते। तत् प्रागेव दर्शितम्।

एवं विज्ञानवादे खण्डितेऽपि आधुनिकबाह्यार्थविरोधिनो नियतज्ञान-सापेक्षवस्तुसत्त्ववादिनः किञ्चित् सूक्ष्मतरं मतमाविष्कृतवन्तः। तस्य नाम Phenomenalism इति। पारिभाषिकमिदं नाम मया अत्र अवभाससम्भावनानिर्मितार्थवादः, उत सङ्क्षेपेण अवभासवाद इति पदेन अनूद्यते।

यदि बाह्यं वस्तु ज्ञानातिरिक्तं नास्ति एव, तदा मया अन्येनापि वा अदृश्यमानमिदं पटं दर्शनद्वयमध्यवर्तिकाले कुत्र तिष्ठति, लयं वा याति इति महानेकः क्लेशो विज्ञानवादिनाम्। तत्र अवभासवादिनो वदन्ति - अदर्शनकालेऽपि 'घटस्तिष्ठति' इति वाक्यस्य अयमेव फलितार्थः -

'यदि केनचित् तत्काले तद्देशे चक्षुरुन्मील्य यथोचितेन आलोकेन सह अवलोकनं क्रियेत तदा तेन तत्काले अपि घटाकारकः अवभासः अनुभूयेत' इति।

वस्तुनः सत्ता खलु तादृशावभासजननसम्भावना एव। ज्ञातृनिष्ठमवभाससत्त्वम्, अथवा अवभासासत्त्वेऽपि कस्मिंश्चित् ज्ञातरि अवभाससम्भावनां च अतिरिच्य वस्तूनामवभासासम्बद्धं किमपि निरपेक्षमस्तित्वं ते नाङ्गीकुर्वन्ति। तस्मात् यदि इन्द्रियमानसं योगालोकादिसामग्री अभविष्यत् तदा घटाकाराः अवभासाः अपि अभविष्यन् इति सम्भावनारूपेण तृड्ग्र्थेनैव घटस्य अर्थस्य सत्तायाः लक्षणं क्रियते। न हि घटो घटाभासजननसम्भानतः अन्यः कश्चित्

बाह्यः पदार्थः। A. J. Ayer-महोदयेन इदमेव मतं स्वकीये The Problem of Knowledge-ग्रन्थे प्रतिपादितम्[7]। पश्चात् Oxford-विश्वविद्यालयस्य प्राध्यापकेन Isiah Berlin-महोदयेन अस्य मतस्य समालोचनं कृतम्। को वा अयमवभासो नाम? ज्ञानं वा ज्ञानविषयो वा ज्ञातृविशेषमनसि स्थितो वा नैर्व्यक्तिको वा एवं विकल्पान् न सहते अयं वादः। अपि च 'यदि...तर्हि' इति वाक्यार्थः सम्भावना नाम का इति तदपि स्पष्टीकर्तुं महान् क्लेशः अवभासवादिनाम्। आधुनिकदार्शनिकानामन्येषु विवादपदेषु दार्शनिकविषयेषु अपि लाघवयुक्तिबलात् स्वतन्त्रपदार्थनिषेधः प्राय एकपदार्थस्य अपरपदार्थे पर्यवसानमाश्रित्य एव क्रियते। लोके अङ्गीकृतः अयं पदार्थः स्वरूपतः अस्मिन् अन्यस्मिन् क्लृप्तपदार्थे एव पर्यवस्यति इति कृत्वा पर्यवसानन्यायेन केषाञ्चित् लोकव्यवहारसिद्धानां पदार्थानामपलापः क्रियते। तद्यथा नव्यदेहात्मवादिनः - 'चैतन्यं स्वरूपतो मस्तिष्कस्नायुधर्मविशेषे एव पर्यवस्यति' इति वदन्ति, नव्यबाह्याचरणवादिनः Behaviourist आत्मसत्तां मनःसत्तां च निराकुर्वन्तः 'चित्तं नाम बाह्याचरणप्रवणताविशेष एव' इति वदन्ति, भविष्यत् वस्तुसत्ताखण्डनकारिणः 'अनागतवस्तुनो नाम इदानीन्तनप्रत्याशासम्भावनाज्ञानादिषु एव पर्यवस्यन्ति। न हि भविष्यन्नाम अपरं किञ्चिदस्ति' इति वदन्ति। अवभासवादिनोऽपि तादृशाः पर्यवसानवादिनः (Reductionist) भवन्ति। परन्तु अनुभवविरुद्धोऽयं पर्यवसानवादो यस्मिन् गृहे वयं निवसामः, न तद्गृहमवभास-

सम्भावनामरा भवति, प्रत्युत इष्टकादिमयमेव। न हि अवभास-सम्भावनाभिर्निर्मितं घटस्य शरीरं नापि सर्वजीवेषु मृतेषु पृथिवीयं ज्ञानसम्भावनामात्रशरीरा तिष्ठेत् इति वयं भौतविज्ञानिनो वा मन्यन्ते। तस्मात् अधुना एकविंशशताब्दे पुनरेतानि लोकविश्वासविरोधिमतानि परित्यज्य अस्माकं न्यायदर्शनप्रतिपादिते Scotland-मध्ये च Thomas Reid-प्रतिपादिते ऋजुसाक्षाद्बाह्यप्रत्यक्षवादे[8] एव बहूनां Robert Audi, Alston, Putnam-प्रभृतीनां पाश्चात्यदार्शनिकानामभिरुचिः परिलक्ष्यते।

यदि तावत् बाह्यप्रत्यक्षप्रक्रियायां, तस्य विषयीभूते अर्थे च एतावान् विवादः, अन्तःप्रत्यक्षविषये बहुलतर एव विवादडम्बरः स्यात्। तस्य आत्मसाक्षात्प्रत्यक्षस्य विषयीभूतस्य आत्मनः स्वरूप-विषये भूयसीनां विप्रतिपत्तीनां सत्त्वात्। तत्र अत्यन्तं जडविलक्षणे मस्तिष्कादिदेहावयवातिरिक्ते आत्मनि एव प्रत्ययो नास्तीति कृत-निश्चयाः अधिकाधिकाः जडैकसत्त्ववादिन आधुनिकपाश्चात्य-दार्शनिकाः, तादृशस्य आत्मनः अनुपलम्भात्, जडैकसत्तावादस्य च प्रागेव अङ्गीकारात्। तत्र अष्टादशे शतके David Hume-महाभागः स्वानुभवं निवेदयन् 'यदा अहमन्तः प्रविश्य सावधान-मवलोकयामि तदा क्षणिकविज्ञानानि, दुःखानुभवान्, सुखानुभवान्, संवेदनानि, स्मरणानि, रागद्वेषादिभावांश्च पश्यामि, परन्तु न कदापि एतदाश्रयीभूतम्, अमूर्तं नित्यद्रव्यमात्मानं द्रष्टुं शक्नोमि' - इति

अलिखत्[9]। ततः प्रारभ्य कश्चिन्नित्य आत्मा साक्षात् अनुव्यवसायविषयो न वा इत्यत्र वादानुवादाः प्रवृत्ताः। परन्तु आत्मा दृश्येत न वा, अजस्रं मानसभावाः अवश्यमेव दृश्यन्ते। तस्मात् इच्छासुखज्ञानानामन्तर्निरीक्षणं प्रायः सर्वैरेव अङ्गीक्रियते। न हि वयं स्वमनोगतानां भावानां ज्ञानाय व्याप्तिविशिष्टपक्षधर्मतासहकृतानां हेतूनां प्रयोजनमनुभवामः। नापि चक्षुषा, कर्णेन, त्वचा वा जानीमः 'अहं सुखी' इति, 'अहं जानामि' इति वा। तस्मात् अस्ति मानसप्रत्यक्षविशेषः अन्तर्निरीक्षणम् (Introspection) इति तस्य न केवलं साक्षात्कारत्वं, परन्तु नियतमभ्रान्तत्वमपि अङ्गीकृतं पाश्चात्यैः। कथं स्वात्मनिष्ठक्रोधलोभादिविषये अस्माकं स्वकीय एव अनुव्यवसायः कदाचिद्भ्रान्तो न भवति किल? क्रुद्धवदाचरन्नपि कदाचित् कश्चिद्वदति 'नाहं क्रुद्धः' इति। सुखी अपि वदति 'अहं दुःखी' इति तु दृश्यत एव। परन्तु तत्रापि न हि ज्ञाने मिथ्यात्वं, परन्तु वाक्ये एव, कश्चित् 'हरित्' इति शब्दस्य प्रयोगमजानन् नीलज्ञानकाले अन्तर्निरीक्षणेन अनुभवति 'हरिद्रूपं मया दृश्यते' इति। तदापि नायमनुव्यवसायस्य अपराधः परन्तु शब्दार्थज्ञानमेव तत्र दुष्टम्।

परन्तु यज्ज्ञानं साक्षिप्रत्यक्षात्मकमेव भ्रमशङ्कारहितं भवति तस्य ज्ञाननिरपेक्षविषयसत्त्वेऽपि विवादस्य अस्ति बीजम्। तस्मात् अन्तर्निरीक्षणमधिकृत्य समस्यात्रयमधुनाऽपि बहुधा विचार्यते Sydney Shoemaker-इत्यादिभिर्दार्शनिकैः[10]।

प्रथमा समस्या इयं - ज्ञाननिरपेक्षविषयाः यज्जातीयस्य ज्ञानस्य भवन्ति तेषां क्वचित् विषयव्यभिचारित्वमपि सम्भवति, अपि च तादृशविषयाः अज्ञाता अपि तिष्ठन्ति, परन्तु सुखज्ञानमस्ति चेत् सुखमवश्यमेव अस्ति इति स्वीकारात्, अननुभूतसुखानां च अस्वीकारात् सुखज्ञानयोरभेद एव प्रसज्यते। यदि ते भिन्ने स्याताम् तदा सुखमस्ति सुखज्ञानं नास्ति इति सम्भावना, सुखं नास्ति सुखज्ञानमस्ति इति च सम्भावना स्यात्। परन्तु तादृशी नास्ति। इत्थं ज्ञानार्थयोर्भेदे लीयमाने अन्तर्निरीक्षणस्य प्रत्यक्षत्वमेव लुप्येत इति।

द्वितीया जिज्ञासा तावत् - बाह्यप्रत्यक्षं कदाचित् प्रमा कदाचित् भ्रमो भवति। अन्तःप्रत्यक्षं तावत् कदापि भ्रमो न भवति। तस्मात् तस्य प्रमात्वमपि कुतः? अपि च पाश्चात्ये मनसः पृथगिन्द्रियत्वं केनापि स्पष्टतया न प्रतिपादितं स्वीकृतं वा। तस्मादिन्द्रियजन्यमिदं ज्ञानमिति ते न वदन्ति। परन्तु केचित् सर्वं ज्ञानं स्वप्रकाशमिति मत्वा विषयप्रकाशकाले एव साक्षादात्मनो ज्ञानस्य च ग्रहणं स्वीकुर्वन्ति। परन्तु तादृशग्रहणस्य प्रामाण्य-परीक्षणस्यैव अनवकाशात् कथं तदन्तर्निरीक्षणं प्रमापदवाच्यमित्येव महान् संशयगोचरो विषयः।

तृतीया तावत् एकव्यक्तिमात्रवेद्यत्वात् अन्तर्निरीक्षणविषयाणां सुखदुःखादीनां शब्देन अवाच्यत्वं प्रसज्यते। अहमपि गुडं खादामि।

खादति भवानपि। परन्तु मम यत् स्वादज्ञानं भवति तत्र प्रतिवारं कश्चित् स्वानुभवैकवेद्यो विशेषः अस्ति यो विशेषो भवतः गुडमाधुर्यज्ञाने नास्ति। परन्तु सर्वाः भाषाः सर्वे च शब्दाः अनेकव्यक्तिबोध्याः। अनेकव्यवहार्या एव एकमात्रव्यक्तिव्यवहार्या या भाषा सा भाषा एव न भवति इति **Wittgenstein**-महाभागानां कश्चिन्मान्यतमः सिद्धान्तः[11]। परन्तु सर्वसाधारणशब्दैरन्तर्निरीक्षणप्राप्तानां प्रमाणामभिलाप एव कर्तुं न शक्यते। तस्मादव्यवहार्यत्वात् इदं मानसमेकव्यक्तिमात्रवेद्यविषयकं ज्ञानं ज्ञानपदवाच्यमेव न इति तृतीया समस्या।

एवं स्वविषयेण सह अस्पष्टभेदशालित्वात्, अप्रामाण्यशङ्कानिर्मुक्तत्वात् सर्वप्रमातृबोध्यशब्दैरव्यपदेश्यत्वाच्च स्वात्मगतसुखदुःखादीनां सर्वप्राणिसाधारणं यन्मानसं ज्ञानं तद्यदि ज्ञानमेव न स्यात् तदा तादृशानाम् अभ्रान्तानाम् अन्तर्निरीक्षणानामेव सर्वप्रमान्याय्यत्वमूलप्रत्ययत्वं दुष्प्रतिपाद्यं स्यात्। आत्मज्ञानहीनाः वयं, स्वान्तःकरणविषये एव अन्धाः, स्वकीयभयशोकहर्षविषादादीनपि न विजानीम इति लोकप्रतीतिव्याघातश्च प्रसज्येत। इत्यतः पूर्वोक्त-समस्यात्रयस्य समाधानानि आविष्कर्तुं बहुधा यतमानाः सन्ति अधुनाऽपि पाश्चात्यमनोदार्शनिकाः।

यदि स्वचित्तवृत्तीनां ज्ञानं तस्यापि न्याय्यत्वं दुरुपपादं भवेत् तदा नित्यपरोक्षस्य परचित्तवृत्तीनां ज्ञानमस्माकं कथं जायते

इति प्रश्नो दार्शनिकविचारैर्बहुधा एव परीक्षामर्हति इति निश्चितम्। न हि देवदत्तस्य हर्षविषादौ यज्ञदत्तेन स्वान्तर्निरीक्षणेन देवदत्त-शरीरदर्शनेन वा साक्षात् ज्ञायेते। परन्तु प्रायः स्वजनानां दुःखं वयं निस्संशयतया विद्मः। किं तत्र प्रमाणम्? समाजस्य स्थितिरपि परचित्तप्रमानिर्भरा भवति। अन्तेवासिनां संशयः गुरुणा छेत्तव्यः, सुतदुहितृणां सुखं पितृभ्यां सम्पादनीयं, वचसा परेषु दुःखं नोत्पादनीयमित्यादीन् धर्मान् पालयितुमपि वयं न शक्नुमो यदि परगतसंशयसुखदुःखानां न्याय्ययथार्थप्रतीतिरस्माकं कदापि न स्यात्। परचित्तविषयकप्रमया विना अस्माकं वृद्धव्यवहारात् शक्तिग्रहोऽपि न भवितुमर्हति। परन्तु नास्ति तादृशप्रमायाः न्याय्यत्वस्थापनाय कोऽपि सरल उपायः। मुखविकासभ्रूकुट्यादितः प्रसादरोषाद्यनु-मितिरिति चेत् तादृशी अनुमितिस्तु बहुहेत्वाभासदुष्टा इति प्रतिभाति। तत्र 'यदा यदा दर्पणे मया स्मेराननं दृष्टं तदा मच्चित्तगतो हर्षः अनुभूतः' - एतादृशव्याप्तिबलात् चैत्रस्य शरीरे स्मेराननलिङ्गदर्शनात् चैत्रेऽपि मच्चित्तगतहर्ष एव अनुमीयेत, अन्यविधहर्षस्य कदापि मया अननुभूतत्वात् इति महत् खण्डनं Wittgenstein-महोदयेन कृतम्[12]।

तस्मात् मुखविकासाश्रुपातनेत्ररक्तिमादीनां बाह्यप्रत्यक्ष-विषयीभूतानां चिह्नानां ज्ञानमेव हर्षशोकक्रोधादीनां परगतानां भावानां साक्षाज्ज्ञानरूपेण परिचीयतामिति लोकव्यवहारमर्यादारक्षणार्थं

तेन स्थापितम्। परन्तु कथमीदृशं ज्ञानं प्रत्यक्षमनुमितिरुपमितिः शाब्दं वा इति स्पष्टतया न निर्णीतम्। यथा अहं स्वकीयभयं मनसा साक्षात्करोमि तथा मम वेपथुवैवर्ण्यादिकं दृष्ट्वा अन्ये न साक्षात्कुर्वन्ति इति तु अप्रत्याख्येयम्। भ्रमशङ्कादयोऽपि परचित्तज्ञानं यथा ग्रसन्ति तथा स्वात्मगुणज्ञानं न स्पृशन्ति। इत्थम् अधुनाऽपि पाश्चात्यप्रमाणमीमांसायां परात्मनिष्ठमनोवृत्तीनां प्रमा कथं घटते इति महती समस्या चर्च्यमाना प्रचलति।

अधुना स्मृतिज्ञानमधिकृत्य आधुनिकपाश्चात्यविचाररीतिः यत्किञ्चिदुद्घाट्यते। यद्यपि स्मरणस्य प्रामाण्यमेव प्राच्यनैयायिकैरस्वीकृतं, पाश्चात्यप्रमाणमीमांसकाः प्रायो यथार्थस्मृतिं प्रमारूपेण (न्याय्ययथार्थप्रतीतिरूपेण) एव स्वीकुर्वन्ति। संस्कारजन्यज्ञानं विना शुद्धगणितसूत्राणां रेखागणितस्य वा सम्यग्ज्ञानं नोपपद्यत इति हेतुतः अतिप्राचीनमहादार्शनिकप्रवरेण प्लेटो-महोदयेन सर्वं पूर्वतः-सिद्धज्ञानं प्राग्भवीयज्ञानस्यैव स्मरणात्मकमिति अपि प्रतिपादितम्। यतः तन्मते पूर्वतःसिद्धज्ञानमेव प्रमाणमन्यत्सर्वमिन्द्रियजं प्रमाणाभासस्ततः सर्वा हि प्रमा स्मरणात्मिका इत्येव पर्यवसानं तस्य मतस्य। स्मरणस्य लक्षणं किमिति वितर्कपदम्। 'भूतकालीनविषयकं ज्ञानम्' इति लक्षणं तु शाब्दानुमित्यादौ अतिव्याप्तम्। गदाधरभट्टाचार्यो व्युत्पत्तिवादग्रन्थमरचयत् इति भूतकालीनविषयकं ज्ञानं मे आप्तोपदेशाज्जातं शाब्दं, न हि स्मृतिपदवाच्यम्। ननु तत्रापि

'स्मरामि' इति व्यवहारो दृश्यत इति चेत् 'हरिं स्मरामि' इतिवदौपचारिकोऽयं प्रयोगः। न हि भूतकालीनग्रन्थरचनायाः त्रिशताधिकवर्षप्राचीनायाः स्मरणं मयि सम्भवति, मम तादृशानुभवाभावात्। परन्तु शाब्दं यत् ज्ञानं तद्विषयकं मया प्रागर्जितं तस्यैव शाब्दानुभवस्य स्मरणं 'स्मरामि' इति वाक्येन उल्लिख्यते।

संस्कारमात्रजन्यं ज्ञानमित्यपि न समीचीनं लक्षणं स्मृतेर्यतः पूर्वानुभवस्य संस्कारेण सह वर्तमानकालीनोद्बोधकादीनां मनःसंयोगादीनां च सन्निवेशं विना केवलेन संस्कारेण स्मृतिर्न जन्यते। संस्कारजविकल्पप्रतिभासमयं ज्ञानं स्मृतिरित्यपि अयुक्तम्। भ्रमस्वप्नमिथ्याकल्पनादिषु अतिव्याप्तेः। मातृमुखात् स्वकीयबाल्यकालीनचरितं श्रुत्वा तच्छाब्दबोधसंस्कारवशात् 'अहं बाल्ये अतिमेधावी क्रीडाकुशलः आसम्' इति मृषा कल्पना यदि जायते, न सा स्मृतिः। अपि च स्मृतिर्बहुविधा भवति। पाश्चात्यैः मनोवैज्ञानिकैः -

Retention (संस्काररक्षणम् - पूर्वार्जितसंस्काराणाम् अप्रमोषः)

Recollection (इदमित्थमासीत् इति पूर्वानुभवजन्यसंस्कारजन्यं भूतकालीनवस्तुस्थितिपरिज्ञानम् )

Habit Memory (अभ्यासदशापन्नं संस्कारदृढीभावात्मकं दाक्ष्यम् 'पायसपाकक्रियां स्मरति' 'सामगानं स्मरति' - इति)

Long Term Memory (सुचिरप्राचीनविषयकम् आबाल्यतो बहुधा

स्मृतस्य पुनःस्मरणात्मकस्थायिनी स्मृतिः)

Short Term Memory (काञ्चित् निमेषान् यावत् तात्कालिकं वारमेकमव्यवहितप्राक्क्षणिकविषयकं स्मरणम्)

Recognition (प्रत्यभिज्ञा)

इति स्मृतिप्रकारभेदाः आलोचिताः। एतेषु लक्ष्येषु भिन्नेषु लक्षणमपि भिद्यते। विशेषतः अत्याधुनिके काले मस्तिष्कविज्ञानिभिः मस्तिष्क-पूर्वभागे, मस्तिष्कमध्यभागे च Amygdala - नामके Hippo campus नामके च अतिकनीयसि स्थानद्वये रागद्वेषादिचित्तवृत्तीनां स्नायविकनियन्त्रणकारिणि मस्तिष्कप्रत्यङ्गयोः सक्रियत्वे सति सुचिरप्राचीनविषयकं स्मरणं, निष्क्रियत्वे सति चिरदीर्घस्मृतिप्रमोषः परिलक्षितम्। तस्मात् - यत्र यत्र रागो द्वेषो भावान्तरानुषङ्गो वा तत्र तत्रैव स्मृतिजनकसंस्कारस्थितिरन्यथा उपेक्षाबुद्ध्या, ताटस्थ्येन, अनवधानपूर्वकं विषयाणाम् अनेकशो दर्शनमपि स्मृतिजनकसंस्कार-स्थापनाय न कल्पते - इति तेषामनुमितिः।

यथा प्रत्यक्षविषये तथा स्मरणविषयेऽपि मतद्वैविध्यं त्रैविध्यं वा पाश्चात्येषु परिदृश्यते।

तत्र केचित् (Bertrand Russell-प्रभृतयः[13]) मन्यन्ते स्मरणात्मकं ज्ञानं साक्षात् स्वविषयं भूतकालं गृह्णाति। तस्य कालस्य तत्कालीयविषयाणां च अधुना ध्वस्तत्वात् असत्त्वात् कथं तस्य

ग्रहणं केन वा इन्द्रियेण वर्तमानमात्रग्राहकेण तस्य साक्षात्सन्निकर्ष इत्यादयः संशयाः भूतसाक्षात्कारवादिभिरित्थं निराक्रियन्ते। संस्कारसहकृतानि चक्षुरादीनि समनस्कानि इन्द्रियाणि अतीतं वस्तु अतीतत्वेनैव 'तत्ता' विशिष्टतयैव गृह्णन्ति इति सर्वैरेव अङ्गीक्रियते। तस्मात् नास्त्ययं नियमो वर्तमानमात्रग्राहकाणि इन्द्रियाणीति। यदि कदाचिदपि स्मरणद्वारेण अस्माकं भूतकालस्यैव साक्षात् प्रतीतिर्न स्यात् तदा अनुमानादिभिरपि पारोक्ष्येण 'यदि अधुना एवं संस्कार-जन्यप्रतिभासोद्रेकः तदा भूतकाले एवमेव आसीत् स्थितिः' इति व्याप्तिविशिष्टपक्षधर्मताज्ञानमपि कथं स्यात्, 'भूतकाल' शब्दस्याऽपि अर्थानवबोधात्? न हि वर्तमाननिषेधमात्रेण अपोहद्वारेण 'भूत'-शब्दार्थप्राप्तिः, अनागतस्यापि वर्तमानप्रतिषेधान्तर्गतत्वात्। तस्मात् अस्ति कश्चित् भूतत्वेन भूतसाक्षात्कारः। स एव स्मृतिरूपः प्रत्ययः।

अपरे तु भूतकालीनविषयाणां नित्यपरोक्षत्वं प्रत्यक्षायोग्यत्वम् अभ्युपगच्छन्तो वर्तमाने उद्रिक्तानां प्रतिभासानाम् अनुभवात् तेषामन्यथाऽननुपत्त्या अवश्यं मया अतीते एवमनुभूतमिति ऊहात्मकं परोक्षं स्मृतिज्ञानमिति वदन्ति।

परन्तु यदि स्मरणज्ञानं साक्षात् भूतार्थग्राहकं न स्यात्, संस्कारजन्यं कञ्चित् विकल्पप्रतिभासम् (Image) मनसा सम्प्रेक्ष्य तत्कारणीभूता तदनुरूपा पूर्वानुभूतवस्तुस्थितिरतीतकालीना अनुमीयते तदा बाह्यानुमेयवादस्य बाह्यार्थभङ्गवादे पर्यवसानमनुसृत्य अत्रापि

अतीतकाल एव अलीको विकल्पविलसितः। ननु जगदिदमकस्मादस्मिन्नेव क्षणे जातमिति संशयोऽपि लब्धावसरः स्यात्। तथा च कल्पनया सर्वं स्मृतिज्ञानं भ्रमात्मकं स्यात्। तस्मात् Bertrand Russell-महोदयेन उक्तं - यदि साक्षात् अतीतग्राहकं स्मरणमिति वयं नाङ्गीकुर्मः तदा अधुनैकसत्त्ववादः आपद्यते। लोकव्यवहारतः सर्वथा अनिष्टा सा आपत्तिः[14] - इति।

यद्यपि यथार्था स्मृतिः साक्षादेव भूतकालीनमर्थं विषयीकुर्यात्, प्रकारत्रयेण स्मृतिः प्रायः अयथार्था अपि भवति। प्रथमतो यज्ज्ञानं वस्तुत आप्तवचनात्, अनुमानात्, ग्रन्थादिपाठात्, अन्यथा परोक्षेण उपायेन वा प्राप्तं, कदाचित् तदेव 'स्मरामि' इति प्रतीयमानं स्मृतित्वारोपवशात् भ्रान्तं भवितुमर्हति। बाल्ये अहं पित्रा सह पूरीधाम्नि भगवतो जगन्नाथस्य दर्शनार्थं नीत इति बहुशः श्रुत्वा पश्चात् पञ्चदशवर्षेभ्यः अनन्तरं पूरीनगरीं गत्वा जगन्नाथमन्दिरमिदं मया प्राक्दृष्टमिति यदि स्मृत्याभास उदेति, तदा 'मया मन्दिरमिदं दृष्टम्' इति तु यथार्थं ज्ञानम्। परन्तु शाब्दमिदं ज्ञानं स्मरामीत्यंशे भ्रान्तमेव, बाल्यकालीनानुभवस्य संस्कारस्य प्रक्षीणत्वात्, अधुना शाब्दज्ञानसामग्र्याः प्रबलत्वाच्च।

द्वितीयतो यदि आद्या अनुभूतिरेव विपर्ययात्मिका आसीत् तदा तज्जन्या स्मृतिर्यथानुभूतित्वादेव अयथार्था भवति, कामलादिरोगजनितपीतशङ्खदर्शनजन्यपीतशङ्खस्मरणवत्।

तृतीयतो यथार्थाऽपि अनुभूतिरतिदीर्घकालान्तरे रागद्वेष-

मोहादिवशाच्च कदाचित् प्रकारांशे अन्यथास्मर्यमाणा भ्रान्तस्मृति-जनिका भवितुमर्हति। वारद्वयं वाराणसीं गत्वा वर्षपञ्चकानन्तरं कश्चित् 'अहं वाराणसीं वारत्रयं गतवान्' इति स्मर्तुं शक्नोति।

एवं नैकविधां भ्रमशङ्कां दूरीकर्तुम् अनुमानेन, शाब्दप्रमया, युक्त्या, अन्यैः स्मरणैश्च सामञ्जस्यम्, अन्येषां च स्मृतिप्रकाशकवाक्यैः सह बाधराहित्यं च प्रतिष्ठाप्य कस्यचित् स्मृतिज्ञानस्य प्रामाण्यं परतोन्याय्यत्वसाधकयुक्तिभिः ज्ञापितव्यमिति केचित् वदन्ति।

परन्तु अत्र अस्ति एका महती समस्या। यदि स्मरणमात्रेषु अस्माकम् अनास्था स्यात्, तदा अनुमानेन, शाब्दबोधेन, अन्येषां स्मृतविषयाणां समर्थनेन, स्वकीयस्मरणान्तरैः बाधराहित्येन वा न हि तस्मिन् स्मृतियाथार्थ्ये विश्वासः कदापि उत्पाद्येत - तेषां सर्वेषामेव समर्थकप्रमाणानां स्मरणात्मकत्वात्।

व्याप्तिस्मरणं विना अनुमितिः, पदजन्यपदार्थस्मृतिं विना शाब्दबोधः, दर्शनस्पर्शनादिभिरेकार्थग्रहणात्मकमनुसन्धानं विना प्रत्यभिज्ञातव्यस्थानद्रव्यपुरुषादीनां प्रत्यक्षानुभवोऽपि न सम्भवति। तस्मात् स्मृतिज्ञानमबाधितं चेत् संशयादिभिरग्रस्तं चेत् स्वत एव स्वस्य प्रामाण्यं ज्ञापयति इति केषाञ्चित् आधुनिकानां सिद्धान्तः। यदि स्मरणान्तरेण बाधिता न स्यात्, युक्त्या च स्वव्याहता असंलग्ना न स्यात्, तदा स्वल्पकालात् अनन्तरं 'मयेदं पूर्वेद्युः दृष्टम्' इति स्मृतिः स्वातन्त्र्येण प्रमाणमेवेति तेषामाशयः।

न हि एते अतिगहनप्रश्नाः अतिसङ्क्षेपेण सत्वरं वा समाधानमर्हन्ति। किञ्चित् परिचयमात्रमेषां दत्तम्। A.J.Ayer-महोदयानां The Problem of Knowledge[15]-ग्रन्थस्य स्मरणाध्यायस्य पठनादेव मूलविषयाणां ज्ञानं प्राथमिकतया उत्पद्येत।



# उपसंहारः

प्राच्यप्रमाणशास्त्रमिव पाश्चात्यप्रमाणमीमांसाऽपि बहुशाखासु वितता, अतिगहनकुटिलयुक्तिप्रतियुक्तिभिर्मतवैचित्र्यसङ्कुला विशेषतो विगतचतुश्शतवर्षाणि यावत् प्रवर्द्धमाना प्रवहति। तत्रादौ षोडश-शताब्दे देकार्त्-स्पिनोजादिभ्यः शुद्धबुद्धिवादिभ्य आरभ्य सप्तदश-शताब्दे लक्-ह्युम् - प्रभृतिभिः प्रत्यक्षैकमुख्यप्रमाणवादिभिर्दार्शनिकैः यादृशो विचारः, कान्ट्महोदयेन च एतयोः समन्वयं कुर्वता मनुष्यज्ञानपरिधिं च निर्णयता यादृशी चर्चा कृता तादृशे विचारे, तादृश्यां च चर्चायाम् 'इत्थं विश्वसितुमुचितम्', 'अतीन्द्रियविषयेषु निराधारतर्कं न योजयेत्', 'निष्प्रमाणके आशये आग्रहवशात् स्वार्थसिद्धिमात्रार्थं न विश्वसेत्', 'ईदृशी प्रतीतिर्न्याय्या, अन्यादृशी तु अन्याय्या', 'एवं स्वरूपे आप्तवाक्ये विश्वसेत्','अनुमानशब्दादिभिः परीक्ष्य स्मृतिज्ञानं निश्चिनुयात्' - इत्यादयो विधिनिषेधपराः नियमा एव अन्ततो गत्वा उपालभ्यन्ते; प्रमाणशास्त्रस्य निष्कर्षः तेषु ज्ञानसम्यक्त्वनिर्धारकेषु औचित्यनियमेषु एव पर्यवस्यति स्म।

परन्तु इदानीं केचित् पाश्चात्यप्रमाणतात्त्विकाः तादृशे शुद्धबुद्धिमात्रनिर्भरे प्रमाणनये प्रणष्टश्रद्धाः मस्तिष्कस्नायुविज्ञान-रसायन-भौतपदार्थविज्ञानादिवत् प्रमाणविज्ञानमपि भूयःपर्यवेक्षण-परीक्षणादिभिः नैसर्गिकीकर्तुमुत्सहमानाः 'नैसर्गिकीकृतप्रमाणतत्त्वम्' (Naturalized Epistemology) एव परिपोषयन्ति।

यथा जीवशरीरस्थसूक्ष्मस्नायुजीवकोषादिविषये विधिवाक्यानि न प्रयुज्यन्ते, परन्तु तेषां स्वभावगतिपरिणामादयः केवलं पर्यवेक्ष्य वर्णयितुं शक्यन्ते, तथैव प्रत्यक्षादिज्ञानस्य, स्मरणादिज्ञानस्य, शब्दार्थज्ञानस्य, पदव्युत्पत्तिप्रयुक्तस्य वाक्यार्थज्ञानस्य वा, भूयोदर्शन-लभ्यस्य सार्वत्रिकसहचारादिज्ञानस्य वा सङ्ख्यागणितसम्मतं मनोविज्ञानसम्मतं च नैसर्गिकं व्याख्यानं वर्णनं च (Explanation and Description) प्रमाणशास्त्रस्य कार्यं भवति। एतन्मते, न हि इदं न्याय्यतया ग्राह्यमिदं च वर्जनीयमित्याकारकं विश्वासाविश्वा-सभाजनतानिर्देशः (Not an ethics of belief) अस्मात् शास्त्रात् प्राप्य इति नैसर्गिकप्रमाणविज्ञानिनामभिमतम्।

अस्यां व्याख्यानमालायां तादृशनैसर्गिकप्रमाणविज्ञानस्य चर्चा न कृता परन्तु पाश्चात्यप्रमाणमीमांसायाः मुख्यविषयवाचिपदत्वेन उररीकृतस्य 'नॉलेज् (Knowledge)' इति पदस्य संस्कृते 'प्रमा'पदेन भाषान्तरणमभ्युपेत्य वयमतिसङ्क्षेपेण तत्रालोचितविषयाणां केषा-ञ्चिन्मतानां च खण्डनमण्डनात्मिकां विचाररीतिं स्थालीपुलाकन्यायेन प्रादर्शयाम। क्रमशस्तत्रादौ प्रमालक्षणमनुसन्धाय 'न्याय्य-यथार्थ-निश्चयात्मकप्रतीतित्वं प्रमात्वम्' इति निर्वचनमपि अतिव्याप्त्या त्रुटितमिति निर्णीय सदोषस्याऽपि अस्य लक्षणस्य अङ्गीभूतानि घटकपदान्यपि अस्माभिः कथञ्चिदालोचितानि। तत्र 'प्रतीतिः' इति विश्वासापरपर्यायभूतं विशेष्यपदम्। व्यवसायात्मकत्वात् सर्वप्रमाणानां 'यथार्थ', 'न्याय्यम्' इति च विशेषणद्वयम्। प्रतीति-त्वयाथार्थ्य - न्याय्यत्वानां स्वरूपेषु विमृष्टेषु, 'नास्ति कोऽपि पूर्ण-

तया न्याय्यो विश्वासः, यत्नेनापि दृढीकृतानां सर्वासां प्रतीतीनामेव भाविबाधकादिभिरसम्यक्त्वशङ्काग्रस्तत्वात्' इति सार्वत्रिकसंशयवादोऽपि कियता विस्तारेण अस्माभिः पर्यालोचितः। तदनन्तरं भारतीयप्रमाणशास्त्रेषु अविचारितचरः कश्चित् विषयः - इन्द्रियप्रत्यक्षानपेक्षाः पूर्वतःसिद्धाः रेखाराशिगणितादिविषयिकाः याः प्रमास्तासां स्वरूपविचारोऽपि अस्माभिरेकस्मिन् व्याख्याने अकारि। तदनन्तरं पाश्चात्यनये प्रत्यक्षानुव्यवसायस्मृतिप्रामाण्यादिकं वितर्कितम्। दिक्प्रदर्शनमात्रमिदम्। न्यायमीमांसावेदान्तसौगतप्रमाणशास्त्रनिष्णातानां भारतीयविपश्चितां विनोदाय पाश्चात्यप्रमाणदर्शनेषु कौतूहलं बुभुत्सां च जनयितुमयम् प्रयासः। अतीतानागतादिविषयेषु परात्मगतसुखदुःखविवक्षाचिकीर्षाज्ञानानां च विषये अस्माकं न्याय्यनिश्चितयथार्थविश्वासाः कथमुत्पद्येरन् इत्यादिप्रश्नाः शताधिकवर्षाणि यावत् नैकेन दार्शनिकेन अतिसूक्ष्मतया युरोपे, आमेरिकायां च विचारिताः। न हि अत्र अनुल्लिखिताः विषयाः पाश्चात्यप्रमाणमीमांसासु अचिन्तिता, अवितर्किता, अमीमांसिता वेति मन्तव्यम्। अधुनैव कश्चिन्महान् वितर्कस्तत्र 'आन्तरवादबाह्यवादः' इति (Internalism and Externalism) ख्यातयोः पक्षयोरुभयोर्मध्ये प्रचलन्नस्ति। तत्र विवादबीजमत्रोल्लिख्यते। प्रमात्वं यदि न्याय्यत्वगर्भितं स्यात् तदा कस्मिंश्चित् प्रमातृनिष्ठे प्रमातृज्ञानगोचरे पुरुषतन्त्रे गुणविशेषे एव तस्य प्रतिष्ठा स्यात्। प्रमावन्तः नियमत एव स्वप्रमाप्रामाण्यप्रमावन्तोऽपि स्युः (Knowledge would entail knowledge of knowledge)। प्रमातुः विपरीतशङ्कानिवारण-

क्षमता स्वकीयप्रतीतिविषये 'यदीदं सत्यं न्याय्यं च नाभविष्यत् तदा न मेऽत्रविश्वासोऽभविष्यत्' इति अनुकूलतर्कात्मिका च सम्यग-सम्यग्विवेकशीलता एव प्रमात्वे प्रयोजकमिति 'आन्तरावस्थानियमित-प्रामाण्यवादिनां', सङ्क्षेपतः 'आन्तरवादिनां' मतम्। अस्य पूर्वपक्षः खलु बाह्यतोनियतप्रामाण्यवादिनां मतम्। यन्नियमतो यथार्थधीजन-केभ्य इन्द्रियव्याप्तिज्ञानसंस्कारादिभ्य आस्थाभाजनेभ्यः करणेभ्यः प्राप्तं वस्तुस्थितिमनतिक्रम्य यथायथं ज्ञानं तदेव प्रमा। प्रमात्वं हि अस्याः वस्तुतन्त्रं, प्रमातुरिन्द्रियपाटवबुद्धिवैशद्यादिसामग्रीनिर्भरम्। न हि नियमतः प्रमात्रा स्वचित्तसाक्षिकनिश्चयादिभिरन्तर्निरूप-णीयमिति 'बाह्यवादः'। बाह्यवादिनां मते न हि सर्वे प्रमावन्तः स्वप्रमानिष्ठप्रामाण्यमपि विजानन्ति, विमृशन्ति वा।

यदि आन्तरवाद आश्रीयेत, तदा मनुष्येतरप्राणिषु मन्दविवेच-केषु तर्कविमुखेषु च मनुष्येषु सफलनिष्कम्पप्रवृत्तिमत्सु अपि प्रमाज्ञानं कदापि न जायते इति अस्वारसिक उदर्क आपद्येत। यतो हि यथार्थज्ञानमपि स्वकीयज्ञानस्य विपरीतशङ्कादितर्कपराहतिशून्यतया न अनुव्यवसितुं शक्यते प्रामाण्यतत्त्वपरीक्षणासमर्थैः प्राकृतजनैः। अपि च ये ये विषयाः तर्ककुशलैरपि अभियुक्तैः प्रमातृभिः प्रमिता इति निश्चीयन्ते तेष्वपि पुनः ननु वयं मस्तिष्कस्थयन्त्रविशेषेण वञ्चिताः कच्चित् बहिर्वदाभासमानानां स्वाप्नपदार्थानां दर्शनेन वा काकतालीयसंवादवशाज्जागरितवदनुभवामो न वेति आहार्य-संशयेन आन्तरवादिनां मते प्रमात्वनिश्चयो दुःशकः।

सन्ति च बाह्यवादेऽपि बहवो दोषाः। सामान्यत आस्थास्थापनयोग्यप्रमाणजन्यतावादे (**Reliabilism**) एव आधुनिकबाह्यवादस्य पर्यवसानं भवति। परन्तु कियता सामान्येन अवच्छिन्नेषु प्रमाकरणेषु प्रमातृगतगुणेषु वा बाह्यतः (न हि प्रमातुः स्वविवेचनाधीनतया) आस्थास्थापनीया इत्यत्र नास्ति नियामकः। तद्यथा 'सर्वमिन्द्रियजं ज्ञानमेव विश्वासभाजनम्?' उत 'सर्वं चाक्षुषं ज्ञानं विश्वासार्हं?', उत 'सर्वं नीरोगजाग्रच्चक्षुर्जन्यं ज्ञानं वा विश्वासभाजनम्?', उत 'सर्वम् अन्धकाररक्तपीतादिवर्णयुक्तालोकादिप्रतिबन्धकविवर्जितं चाक्षुषं ज्ञानं वा आस्थायोग्यम्' इति विश्वासार्हतावच्छेदकसामान्यधर्मः कः स्यादिति अनिर्णयात् बाह्यवादोऽपि दोषगणग्रस्त इव भाति।

इत्थं पाश्चात्यप्रमाणविचारपारावारोऽपि दुस्तर इति दर्शयित्वा, अस्माकं पारम्परिकविदुषां प्रमाणशास्त्ररसिकानां प्रज्ञाऽपि एतैर्भिन्नैरागमदर्शनैः विवेकं लभेत इति सम्प्रार्थ्य विरमामि।

किमधिकं बहुशास्त्रविचक्षणैः प्रज्ञागङ्गाभगीरथीभूतैः अस्मद्गुरुभिः श्रीमद्भिः प्रह्लादाचार्यैः प्रचोदितो मादृशो वराकोऽपि भवतां नव्यन्यायवेदान्तादिशास्त्रधुरन्धराणां समक्षं भ्रान्तिप्रचुरया सुरगिरा पाश्चात्यदर्शनमधिकृत्य किञ्चिद् भाषितुं साहसं कृतवान्।

महतीयं दीनक्षीणपक्षपातिनी कृपा विद्यापीठाधीश्वरस्य सर्वप्रमाणप्राणभूतस्य श्रीभगवतो वेङ्कटेश्वरस्य। अलं पल्लवितेनेति शम्।

ॐ

# अन्त्यटिप्पणी

## प्रथमं व्याख्यानम् - प्रमालक्षणविचारः

1. मार्कण्डेयपुराणम् - एकाशीतितमः अध्यायः; श्लोकसङ्ख्या ३६. (Also known as दुर्गासप्तशती).

2. वाक्यपदीयम् (ब्रह्मकाण्डम्) श्लोकाः १.१४३-१४९, भर्तृहरिः.

3. Plato's Dialogue "Apology" (38a).

4. 'Is Justified True Belief Knowledge?', Edmund Gettier, "Analysis", 1963. Also in the book "Knowledge and Belief", Edited by Phillips Griffiths, Oxford University Press, 1967.

## द्वितीयं व्याख्यानम् - प्रतीतिविमर्शः

1. न्यायमञ्जरी (प्रथमो भागः, प्रथमम् आह्निकम्, 'ज्ञानस्य क्रियात्वविचारः'), जयन्तभट्टः, Edited by - गौरीनाथशास्त्री Varanasi, Sampurnananda Sanskrit Visvavidyalaya, 1982, Page 31.

2. The Concept of Mind, Gilbert Ryle, Hutchinson's University Library, London, 1949.

3. Philosophical Investigations, Ludwig Wittgenstein, Page 20e, Remark # 43.

## तृतीयं व्याख्यानम् - याथार्थ्यस्वरूपनिरुक्तिः

1. The Problems of Philosphy, Bertrand Russell.

(1) Our theory of truth must be such as to admit of its opposite, falsehood. A good many philosophers have failed adequately

to satisfy this condition: they have constructed theories according to which all our thinking ought to have been true, and have then had the greatest difficulty in finding a place for falsehood. In this respect our theory of belief must differ from our theory of acquaintance, since in the case of acquaintance it was not necessary to take account of any opposite.

(2) It seems fairly evident that if there were no beliefs there could be no falsehood, and no truth either, in the sense in which truth is correlative to falsehood. If we imagine a world of mere matter, there would be no room for falsehood in such a world, and although it would contain what may be called 'facts', it would not contain any truths, in the sense in which truths are things of the same kind as falsehoods. In fact, truth and falsehood are properties of beliefs and statements: hence a world of mere matter, since it would contain no beliefs or statement, would also contain no truth or falsehood.

(3) But, as against what we have just said, it is to be observed that the truth or falsehood of a belief always depends upon something which lies outside the belief itself. If I believe that Charles I died on the scaffold, I believe truly, not because of any intrinsic quality of my belief, which could be discovered by merely examining the belief, but because of an historical event which happened two and a half centuries ago. If I believe that Charles I died in his

bed, I believe falsely: no degree of vividness in my belief, or of care in arriving at it prevents it from being false, again because of what happened long ago, and not because of any intrinsic property of my belief. Hence, although truth and falsehood are properties of beliefs, they are properties dependent upon the relations of the beliefs to other things, not upon any internal quality of the beliefs.

The third of the above requisites leads us to adopt the view - which has on the whole been commonest among philosophers - that truth consists in some form of correspondence between belief and fact. It is, however, by no means an easy matter to discover a form of correspondence to which there are no irrefutable objections. By this partly - and partly by the feeling that, if truth consists in a correspondence of thought with something outside, thought can never know when truth has been attained - many philosophers have been led to try to find some definition of truth which shall not consist in relation to something wholly outside belief. The most important attempt at a definition of this sort is the theory that truth consists in coherence. It is said that the mark of falsehood is failure to cohere in the body of our beliefs, and that it is the essence of a truth to form part of the completely rounded system which is The Truth.

2. 'The Folly of Trying to Define Truth', Donald Davidson, "Truth", Edited by Blackburn & Simmons, Oxford.

**पञ्चमं व्याख्यानम् - सार्वत्रिकसंशयवादस्तस्य निरासश्च**

1. तत्त्वोपप्लवसिंहः, जयराशिभट्टः, सम्पादकौ - पण्डित सुखलालजी सङ्घवी एवं प्रो.रसिकलाल पारीख, बौद्धभारती, वाराणसी, 1987.

2. A Theory of Knowledge, Roderick Chisholm, 2nd Edition, and, Perceiving: A Philosphical Study, Roderick Chisholm, Cornell University Press, London/Ithaca, 1957, Page 30.

3. Reason, Truth & History, Hitary Putnam, Cambridge University Press, 1981.

**सप्तमं व्याख्यानम् - प्रत्यक्षानुव्यवसायस्मृतिपरीक्षणम्**

1. Santanantarasiddhi, Dharmakirti, Translated by H. Kitagawa, Japan, 1965. See the book "Santana and Santanantara" by Mangala Chinchore, Sri Satguru Publications, Delhi, 1996.

2. 'सन्तानान्तरदूषणम्', रत्नकीर्तिः, "रत्नकीर्ति-निबन्धावली", सम्पादकः - अनन्तलाल ठाकुर, 1975.

3. Empiricism and Philosophy of Mind, Wilfrid Sellars, Edited by Rorty and Brandom, Harvard University Press, 1997.

4. An Essay Concerning Human Understanding, John Locke, Edited by John Yolton, Everyman's Library, London, 1965.

5. Treatise Concerning Principles of Human Knowledge and Three Dialogues, George Berkeley, Oxford University Press, 1999.

6. 'A Refutation of Idealism', G.E.Moore, "Philosophical Studies", K.Paul, 1922.

7. The Problem of Knowledge, A.J. Ayer, Macmillan, London, 1956.

8. See entry on Thomas Reid (Direct Realism), in Routledge Encyclopedia of Philosophy.

9. A Treatise of Human Nature (Part1, Book IV, Section VI), David Hume, Edited by Selby Bigge, Oxford, 1975, Page 252.

10. Self-Knowledge and Self-Identity, Sydney Shoemaker, Cornell University Press, 1963.

11. Philosophical Investigations, Ludwig Wittgenstein, Translated by E.Anscombe, Blackwells, 1977, 1997, See sections - 243-427.

12. Ibid.

13. The Problems of Philosophy (Chapter 5), Bertrand Russell, Oxford University Press, 1971, Page 21.

14. Ibid.

15. See Reference no.7 above.

෴

## पाश्चात्यदार्शनिकप्रवराः

(मुखपृष्ठे क्रमशः एतेषां भावचित्राणि विराजन्ते)

**प्लेटो (४२८ क्रीस्तपूर्वाब्दे लब्धजन्मा)** - पाश्चात्यतत्त्वचिन्ता-परमेष्ठिगुरोः, 'नाहं किञ्चिज्जानामि' इति ज्ञानवशादेव आत्मज्ञ-मूर्धन्यतया पूजितस्य सॉक्रातिस्-महाभागस्य मुख्यशिष्यः। सत्ता-साधुता-नरत्व-वृक्षत्वादयः सामान्यात्मकनित्याकृतयः (FORMS) एव परमार्थतः सन्ति, प्रत्यक्षगोचराः अनित्याः व्यक्तयस्तासां सामान्याकृतीनाम् आभासमात्रत्वात् असत्या इति तस्य प्रमेयवादः, शुद्धबुद्धिरेव प्रमाप्रसूतिर्न खलु इन्द्रियजन्या धीरुत्कृष्टप्रमापदवाच्या, इति तस्य प्रमाणवादः च प्राय आधुनिकैः पूर्वपक्षीक्रियते।

**रेणे देकार्ते (१५९६ क्रीस्ताब्दे लब्धजन्मा)** - पाश्चात्यदर्शने आधुनिकयुगस्य 'नवजागृतेः' च प्रधानपुरोहितः। 'यद्यपि इतरान् सर्वान् विश्वासान् संशयाग्निः भस्मीकरोति, 'अहं विमृशामीत्यतो-ऽहमस्मि' इति निश्चिता अवधारणा जानकीव संशयाग्निपरीक्षातः अस्पृष्टा आविरायाति' इति तस्य विश्रुततमो विचारनिष्कर्षः। स च अहंपदवाच्यः आत्मा देहादेकान्तविलक्षणः अविनाशी चैतन्य-गुणवान् ईश्वराधीनः स्वतन्त्रेच्छाकृतिमान्, भ्रमप्रमाशाली, शुद्धयुक्तिभिरेव ईश्वरास्तित्वसाधक इति गणितादिशास्त्रेषु कृतपरिश्रमस्य अस्य सिद्धान्ताः अद्यापि पाश्चात्यदार्शनिकैः खण्डनमण्डनादिभिश्चर्च्यते।

**बर्ट्रण्ड् रसेल् (१९७० क्रीस्ताब्दे दिवङ्गतः, प्रायः शतायुः)** - ब्रिटन्-देशीयः अत्युच्चकुलजातः गणितदर्शनशिक्षादिशास्त्रेषु सुरचितबहुपुस्तकः, साहित्ये 'नोबेल्'-पुरस्कारविजयी, युद्धविरोधी,

मानवप्रेमपरायणः, तार्किकः। गणितमूलसूत्राणि अधिकृत्य, आत्म-तत्त्वविश्लेषणं, जडवस्तुविश्लेषणं, पाश्चात्यदर्शनेतिहासं चाश्रित्य अनेन आङ्ग्लभाषया निबद्धाः ग्रन्थाः प्रायः सर्वैः विश्वदार्शनिकैः अवश्यपाठ्यत्वेन स्वीक्रियन्ते।

**ल्युड्विग् व्हिट्गेन्स्टाइन् (१८८९-१९५१)** - क्रीस्तीयविंशशताब्दस्य सर्वाग्रगण्यः भाषाविश्लेषणदर्शनतत्त्वज्ञः। ऑस्ट्रियादेशीयः प्रयुक्ति-विज्ञानविशेषज्ञोऽपि गणितदर्शने तर्कशास्त्रे च सोत्साहः। बर्ट्रण्ड् रसेल्-महोदयस्य समीपे केम्ब्रिज्-विश्वविद्यालये किञ्चित्कालं दर्शनशास्त्रमधीत्य एव स्वप्रतिभाबलात् आविष्कृतनूतनमार्गः 'तार्किकदर्शनसर्वस्वम्' (Tractatus Logico Philosophicus) इति स्वल्पाक्षरं अपि सारवन्तं ग्रन्थमरचयत्। दार्शनिकवाक्यानि तर्कशास्त्रीयवाक्यानि च लौकिकवाक्यतो विलक्षणानि, निरर्थकानि, वाक्येन यन्नाभिधीयते तादृशसर्वार्थसामान्याकारप्रदर्शनपराणि इति स्वजीवनस्य पूर्वार्द्धे अस्य मतमासीत्। प्रौढे वयसि अनेनैव स्वकीय-'तार्किकदर्शनसर्वस्वम्' खण्डयता, 'लौकिकवाक्यानि वस्तु-सन्निवेशान् अनुकृत्य चित्रवत् अर्थवन्ति भवन्ति' इति स्वमतमेव दूषयित्वा मतान्तरं स्थापितम्। न हि नामपदवत् वस्तुवाचकत्वेन पदस्य सार्थकत्वम्; प्रत्युत भाषाप्रयोक्तृभिः व्यवहार-योग्यत्वमेव। अर्थात् परस्पराभिप्रायज्ञापनबोधनपरिज्ञानादिषु प्रयोजकत्वमेव पदानामर्थवत्त्वम् इति कृत्वा बहुविधानां 'वाक्क्रीडा'नां समाहारादेव अयं शब्दसंसारः संरचित इति अतिगहनस्य तस्य प्रौढदर्शनस्य दिगेषाऽत्र दर्शिता।

ॐ